॥ श्रीढुण्ढिराजाय नमः ॥

# शक्तिवाद-व्युत्पत्तिवाद-विवृतिः ।

"ज्येष्ठत्ववाद-लकारार्थवाद-सादृश्यवाद-विवृतिश्च"

तर्ककाननपञ्चानन-मैथिलश्रीमद्विश्वनाथ शर्म्म-निर्म्मिता० ॥

श्री० ५ मन्महाराजाधिराज-मिथिलेश-संस्थापित-वाराणसेय-पाठालयाध्यापकेन श्रीमत्सङ्कमलालशर्म्मणा "परसरमा"-राजधान्यधिपति-राजकुमार-बाबू श्रीकीर्त्तिधरनारायणसिंहविजयतो लब्धजीविकविद्वद्वर-श्रीमत्सदाशिवशर्म्मभिः संशोध्याऽऽलोक्य-वाराणसेय-यन्त्रेश्वर-यन्त्रालये मुद्रापय्य प्रकाशिता० ॥

सम्वत् १९५७ का० शु० ५ रवाविति शम्० ॥

श्रीढुण्ढयेनमः ३।

# भूमिका।

विलसति खलु निखिलशास्त्रादिप्रधानतया परमप्रयतभूतमखण्डभूमण्डलप्रचलितं विशेषतो विद्यापीठेषु वाराणसी, मिथिला, नवद्वोपादिमान्यमान्यस्थलेषु तार्क्किक, शाब्दिकसाधारण्येन पठनपाठनातिगोचरीभूतं श्रीमद्योगिराजभगवद्गौतममुनि, कणाद, महामहोपाध्यायशास्त्रवर्य्यनास्तिककुलाटव्यनलमैथिलश्रीमदुदयनाचार्य्यादिप्रणीतं न्यायशास्त्रम्० तत्रोक्तमहर्ष्यादिभिः कृताङ्कुररोपणे महामहोपाध्याय श्रीमद्गदाधरभट्टाचार्य्यप्रणीतव्युत्पत्तिवादशक्तिवादादिपल्लवे श्रीमदनेकप्रवलाचार्य्यैर्दृढीकृतस्कन्धेऽत्र शाखिनि समारुरुक्षूणां तदुत्फलास्वादुरसिकानां सुखसमारोहणाय स्वस्ति विविधविरुदावलीत्याद्यखण्डभूमण्डलपण्डितमण्डलीमण्डलायमानसमुद्दण्डप्रचण्डपाण्डित्यचण्डद्युतिद्योतितनिखिलमहीमण्डल-के, सी, आइ, ईत्यादि—पदाङ्कितमहाराजाधिराजमिथिलेश्वरसदासमरविजयिश्री ८ मद्रमेश्वरसिंहविजयदेवदेवानामाज्ञातष्ठाढोनिवास्तव्य महामहोपाध्याय झोपनाममैथिलकुलकैरवचन्द्रतार्क्किकश्रीमद्विश्वनाथशर्म्मरचितसोपानरूपोयं ग्रन्थो विद्वज्जनमनस्सन्तोषाय संशोध्य मुद्रापयित्वा प्रकाशितः अत्र मुद्रणादिदोषाद्यदशुद्धं कृपया विशोध्य सफलयन्त्वायासममत्सराः प्रेक्षावत्प्रवराः " इत्याशासाते,, "प्रकाशक-संशोधकौ"

नैया० झोप० मैथि० श्रीमङ्गमलाल शर्म्म,

परसरमा-वास्तव्य-पं०श्रीसदाशिवझाशर्म्माणौ०

श्रीः ।

# श्रीविश्वनाथीयशक्तिवादविवृतिः

श्रीढुण्ढये नमः ॥ गदाधरपदं ध्यात्वा कृत्वा पादार्च्चनं गुरोः० । करोमि विवृतिं तस्य धीराणां सुखहेतवे ० ॥ १ ॥ श्रीमन्मैथिलविश्वनाथविवृतिं चालोक्य विद्वज्जना विद्वन्मण्डलमण्डितां नृपसभां नीत्वा वशं कौतुकात्०। श्रीमच्छम्भुपदारविन्दविमुखान् जित्वा हि वाक्यैर्वरैरानन्दं परमं भजन्त्यनुदिनं स्वर्गे यथा वाक्पतिः ॥ २ ॥ अथ गून्थादौ सङ्केतो लक्षणा चार्थे पदवृत्तिरिति लिखनमनर्थकमिति चेन्न लक्षणायाः सङ्केतस्य च वृत्तित्वमनभ्युपगच्छतां ज्ञाने पदानां शक्तिः न त्वर्थे,, इत्यनेन पदार्थान्तरस्य वृत्तित्वमभ्युपगच्छतां मतमपाकर्त्तुमेव तस्य प्रणयनात्० तन्मतनिराकरणप्रकारस्य सङ्केतस्य लक्षणायाश्च वृत्तित्वसम्पादनप्रकारस्य च स्वयमेवागू प्रतिपादनात्० ॥ केचित्तु लाघवात्तदर्थविषयकशाब्दवोधजनकत्वस्य पदे, अर्थवृत्तिमभ्युपगच्छतां लक्षणायाश्च वृत्तित्वमभ्युपगच्छतां बैयाकरणविशेषाणां मतमपाकर्तुमाह सङ्केतो लक्षणा चार्थे इति०। अयम्भावः। न च गङ्गायां घोष इत्यादौ तीरवोधस्यानुभाविकतया गङ्गापदस्य तीरस्य वाचकत्वापत्तिरिति वाच्यम्० । इष्टत्वात् सर्व्वे शब्दाः सर्व्वार्थवाचका इति सिद्धान्तात्' वोधकत्वस्यैव वाचकत्वरूपत्वात्० ॥ न चापभ्रंशादपि गाछ—माछ-शब्दार्थप्रत्ययात् वृक्षादिशाब्दबोधजनकत्वस्य

गाच्छादिपदे सत्त्वेन तेषां वाचकत्वप्रसङ्ग इति वाच्यमिष्टत्वात् न च वाचकपदस्य साधुत्वेन तेषां साधुत्वं स्यात् इति वाच्यम् पुण्य-जनकत्वस्य तस्य तत्र तत्रासत्त्वात्०।। अथ तीरन्न तङ्गापदशक्य-मपि तु गङ्गापदशक्यसम्बन्धीत्यादिज्ञानदशायामपि गङ्गायां घोष इति वाक्याच्छाब्दबोधस्यानुभविकस्यानुपपत्तिस्तथाविधवृत्ति-ज्ञानासम्भवात्०।। परे तु वृत्तिं विभजयितुमाह" सङ्केतो लक्षणा चेति० न च विभागबोधकवाक्यस्य सङ्ख्यावाचकपदघटितत्वनि-यमात् प्रकृते सङ्ख्यावाचकपदाघटितत्वात् तस्य विभागपदत्वानु-पपत्तिरिति वाच्यम्० चशब्दस्य द्वित्वबोधकत्वात् तस्य तत्र स-त्त्वेनानुपपत्तिविरहात्० ।। स्मृतमनुभूतं चेत्यादौ द्वित्वबोधकस्य सर्व्वानुभविकत्वादित्याहुस्तन्न वृत्तिलक्षणमनुक्त्वा विभागासम्भ-वात्० लक्षणवाक्याधीन-सामान्यधर्म्ममजानतो विशेषजिज्ञासा-नुदयात्" लक्षणवाक्याधीनसामान्यधर्म्मप्रकारकज्ञानस्य सामान्य-धर्म्मावान्तरधर्म्मप्रकारकज्ञानगोचरेच्छां प्रति स्वातन्त्र्येणेष्ट-साधन-ताज्ञानधर्म्मितावच्छेदकप्रकारकज्ञानसम्पादकतया वा हेतुत्वात्० अत एव सव्यभिचारे लक्षणतः सामान्यमप्रतीतिवतो विशेषजिज्ञा-सानुदयात् सामान्यलक्षणानन्तरमेव विभागो युक्त इत्युक्तम् शिरो-मणिना० ।। यत्तु सामान्यज्ञानाधीनो विभागो न तल्लक्षणप्रत्यय-मपेक्षते सामान्यधर्म्मप्रकारकमानसज्ञानसम्भवात् न विभागानुपप-त्तिरिति तत्तुच्छम्" वृत्तिलक्षणस्य उपायान्तरेण ज्ञानसम्भवे पदा-र्थोपस्थितिव्यापारकः सम्बन्धो वृत्तिरित्यनेनाग्रे तल्लक्षणप्रत्य-यनस्य सन्दर्भविरुद्धत्वात्० ।। न च तात्पर्य्येऽतिव्याप्तिवारणाय तत्प्रदर्शितमिति वाच्यम्'तादृशवृत्तिलक्षणज्ञानवतस्तात्पर्य्येऽति-

व्याप्तिशङ्काया अनवतारात्० ॥ नव्यास्तु" वृत्तिशब्दस्य सङ्केतमात्रे प्रसिद्धतया तन्मात्रस्य लक्ष्यभावं जानद्भिर्लक्षणायामलक्ष्यत्वभ्रमनिबन्धनातिव्याप्तिः प्रतीयते,, अलक्ष्यत्वभ्रमनिराशार्थं प्रथमतो लक्ष्यप्रदर्शनं करोति सङ्केतो लक्षणा चेत्यनेन० तथा चार्थे पदवृत्तिवक्ष्यमाण लक्षणलक्ष्यः संकेतो लक्षणा चेत्यर्थ इति प्राहुः ॥ न च गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः० ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् इत्यत्र, वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमित्यत्र च गमनोत्तरकालिकावश्यकसम्भाविमरणे जन्मपदस्य दूतीसम्भोगार्थेऽधमपदस्य व्यञ्जनावृत्तिदर्शनात् व्यञ्जनावृत्तेर्लक्ष्यत्वाप्रदर्शनेन न्यूनता स्यादिति वाच्यम् नैयायिकैर्व्यञ्जनाया वृत्तित्वानभ्युपगमात्" तत्रतत्र मानसोऽनुमित्यात्मको वा तादृशतादृशार्थगोचरबोधस्वीकारादिति० ॥ शाब्दबोधोपयिकसम्बन्धत्वं वृत्तित्वम्० औपयिकत्वं च, जनकतावच्छेदकविषयितानिरूपकत्वम् ० । एवं च, तात्पर्य्यज्ञानजनकतावच्छेदकसांसर्गिकविषयतानिरूपकत्वस्य स्वरूपसंसर्गे सत्वेन तस्यापि वृत्तित्वप्रसङ्ग इत्यत आह" अर्थेति० । निरूपकत्वं सप्तम्यर्थः निरूपकत्वं च, प्रतियोगित्वानुयोगित्वान्यतररूपम्० प्रकृते बोध्यम् स्वरूपसम्बन्धे उच्चारितत्वप्रतियोगिकत्वस्य इच्छीयविषयताप्रतियोगिकत्वस्य सत्वेनार्थे प्रतियोगिकत्वादिविरहेणातिव्याप्तिविरहः० । ननु घटमानयेत्यादौ कर्मत्वविशेष्यकवृत्तित्वसम्बन्धेन घटप्रकारकबोधेच्छयोच्चरित मिदं पदमित्याकारकतात्पर्य्यज्ञानजनकतावच्छेदकविषयितानिरूपकत्वस्य घटप्रतियोगिकत्वस्याधेयत्वसंसर्गे सत्वेन तत्रातिप्रसङ्ग इत्यत आह" पदेति० ॥ पदस्य

वृत्तिः पदवृत्तिः प्रतियोगित्वं षष्ठ्यर्थः अनुयोगित्वं वा" तथा च,, क्त्वाधेयत्वे पदप्रतियोगिकत्वाभावान्नातिव्याप्तिः ॥ अथ समवायस्यैकत्वेन पदानुयोगिकत्वस्य घटाद्यर्थप्रतियोगिकत्वस्य शक्तिज्ञानादिनिष्ठजनकतावच्छेदकसांसर्गिकविषयताश्रयत्वस्य सत्त्वात्तत्रातिव्याप्तिरिति चेन्न,। समवायस्यैकत्वानभ्युपगमात्० । नचैकत्वस्वीकारपक्षे प्रतीकार इति वाच्यम्" शाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितपदत्वावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपितार्थप्रकारतानिष्ठावच्छेदकतानिरूपितावच्छेदकता वा सांसर्गिकविषयतावत्त्वस्य पर्य्यवसितत्वात्"समवायादौ तस्यासत्वेन प्रतीकारसम्भवात्० । घटपदं स्वविषयकबोधजनकत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यतासम्बन्धेन घटवदित्याकारकज्ञाननिष्ठजनकतानिरूपितावच्छेदकत्वस्य सङ्केतविषयतायाम् गङ्गापदं स्वसम्बन्धिशक्तत्वसम्बन्धेन तीरवदित्याकारकज्ञानजनकतानिरूपितयथाविधावच्छेदकत्वस्य लक्षणानिष्ठविषयतायां सत्वेन तत्र तत्रलक्षणसमन्वयसम्भवात्०एवं देवदत्तः घटशब्दं शृणोतीत्यादौ घटशब्दत्वावच्छिन्नप्रतियोगिकविषयतानुयोगिकाधेयतायां पदप्रतियोगिकत्वस्यास्पदधर्म्मिकतात्पर्य्यज्ञानकारणतावच्छेदकविषयतावत्त्वस्य च सत्वात्०। निरुक्तविशेष्यत्वप्रकारत्वे विषयतारूपे ग्राह्ये नातो वाच्यत्वादावव्याप्तिरिति० ॥ अथ तात्पर्य्यादावतिव्याप्तिवारणायाग्रे पदार्थोपस्थितिव्यापारकसम्बन्धोवृत्तिरित्युक्तम् "तथा च" तात्पर्य्यज्ञानस्य योग्यताज्ञानस्य च पदार्थोपस्थितिद्वारा शाब्दबोधजनकत्वविरहेणस्वरूपाधेयत्वादौ अतिव्याप्त्यसम्भवात् पदार्थयोरुपादानमनर्थकमिति चेन्न, तयोः स्व-

रूपकथनत्वादर्थे पदवृत्तिवक्ष्यमाणलक्ष्यः कतिविध इति प्रश्नोत्तरवाक्यस्यार्थपदघटितत्वेनाकाङ्क्षा निवर्त्तकानुरोधेन तयोरुपादानादित्यपरे०॥ ननु पदार्थोपस्थितिव्यापारकः पदपदार्थयोःसम्बन्धो वृत्तिस्तत्र पदस्यार्थोऽभिधेयः पदार्थ इति व्युत्पत्त्या पदशक्य एव पदार्थो वक्तव्यः, अन्यथाऽन्यस्याप्यन्यपदार्थत्वापत्तिः । "इत्थञ्च" पदलक्ष्यार्थयोस्तथाविधसम्बन्धस्य वृत्तित्वासम्भवात् वृत्तिलक्षणलक्ष्यत्वानुपपत्तिरित्यत आह वृत्त्येति० वृत्तिपदं शक्तिलक्षणान्यतरपरम् विशेषतः पदार्थव्यवहार-विषयताप्रयोजकं, पदज्ञानजन्यवृत्तिज्ञानजन्योपस्थितिविषयत्वमेव "तच्च" शक्यलक्ष्योभयसाधारणमिति० ॥ गङ्गापदं तीरसम्बन्धिनीरे शक्तमितिज्ञानदशायां तीरं गङ्गापदशक्यसम्बन्धि इति ज्ञानदशायां च लक्ष्यार्थे नीरे गङ्गापदार्थत्वानभ्युपगमात्० ॥ अथ पदेन प्रतिपाद्यः पदार्थज्ञानजन्यत्वं तृतीयार्थः पदज्ञानजन्य उपस्थितिविषयत्वमेव तथाविधव्यवहारप्रयोजकमस्तु अलं वृत्त्येत्यस्याभिधानेन इति चेन्न घटपदसमवायस्याकाशादौ । सत्त्वेन घटपदज्ञानजन्योपस्थितिविषयत्वस्याकाशादौसत्त्वेनाकाशादौ घटपदार्थत्वापत्तेः । वृत्तिपदोत्तरतृतीयायाः ज्ञानजन्यत्वमर्थः "तथाच" घटपदज्ञानजन्यवृत्तिज्ञानजन्योपस्थितिविषयत्वस्याकाशादावभावान्न दोषः । न च घटपदज्ञानजन्यत्वन्नोपादेयमिति वाच्यम्' आकाशपदवृत्ति ज्ञानजन्योपस्थितिविषयत्वस्याकाशादौ सत्त्वेनोक्तदोषस्य तादवस्थ्यात्० ॥ न च पदज्ञानस्य वृत्तिज्ञानविधया शाव्दादिहेतुतया स्वतन्त्रपदजन्यत्वानुपपत्तिरिति वाच्यम्" श्रावणप्रत्यक्षस्यापि परम्परया हेतुत्वात्०॥ न च यदा घटपद-

समवायज्ञानाकाशपदवृत्तिज्ञानाभ्यामाकाशोपस्थितिस्तदा आकाशे घटपदार्थत्वापत्तिर्दुर्वारा आकाशोपस्थितौ घटपदज्ञानजन्यत्वस्य वृत्तिज्ञानजन्यत्वस्य च सत्वादिति वाच्यम्" घटपदधर्म्मिकवृत्तिज्ञानजन्योपस्थितिविषयत्वस्य घटपदार्थत्वान्न दोषः ॥ न च घटपदवृत्तिज्ञानजन्यघटाद्युपस्थितौ उद्बोधकान्तरवशादाकाशादेर्भानं यत्र तत्र तथाविधोपस्थितिविषयत्वस्य सत्वेनोक्तापत्तिस्तदवस्थैवेति वाच्यम्" घटपदविशेष्यत्वनिष्ठावच्छेदकतानिरूपितवृत्तिप्रकारतानिष्ठावच्छेदकतानिरूपितज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेकोपस्थितिविषयत्वस्य तथात्वादाकाशादिविषयतायां तथाविधजन्यतावच्छेदकत्वविरहान्न दोषः अथ लाघवात् वृत्त्याश्रयत्वमेवास्तु तत्' इति चेन्न" लक्षणाग्रहशून्यतादशायां तीरादौ गङ्गापदार्थत्वापत्तेः लक्षणायास्तत्र सत्वादिति दिक्० ॥ यत्तु वृत्तिवृत्तिस्वरूपादिनिरूपणे पदार्थव्यवहारविषयनिर्व्वचनस्यानाकाङ्क्षत्वेनार्थान्तरापत्तेरिति, तत्तुच्छम्" पदपदार्थसम्बन्धविचारावसरे कः पदार्थ इत्याकाङ्क्षोदयान्नानाकाङ्क्षत्वावकाश इति० ॥ अभिधीयत इत्यत्र प्राच्यैरिति शेषः ॥ सङ्केतं लक्षयति, इदम्पदममुमर्थं वोधयत्विति,, अस्माच्छब्दादयमर्थो वोद्धव्य इति वा० । इदं पदममुमर्थं वोधयत्वित्यत्र णिजर्थो जनकत्वं वुधधात्वर्थे वोधेऽन्वेति, "तथाचार्थविषयकबोधजनकत्वप्रकारतानिरूपितपदत्वावच्छिन्न-विशेष्यताशालिनीच्छाया वोधः । इतिपदे अर्थइतिपदे अर्थस्य स्वविषयकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यतासम्बन्धः सङ्केतात्मकवृत्तिः,, परत्र च वोधान्वयिजन्यत्वं पञ्चम्यर्थः । तव्यप्रत्ययार्थो विषयत्वमत्र बोधस्य निरूपितत्वसम्ब-

न्धेनान्वयः "तथा च" पदजन्यबोधविषयत्वप्रकारतानिरूपिताशालिनीच्छाया बोधः । एवञ्चार्थे पदस्य स्वजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतापदस्यार्थे सङ्केतात्मकसम्बन्धो वृत्तिः प्रथमसम्बन्धस्य वाचकतारूपत्वं, द्वितीयसम्बन्धस्य च वाच्यतारूपत्वम् बोध्यमित्यग्रे स्वयमेव प्रतिपादयिष्यते । इदमुपलक्षणम्' पुष्पवन्तादिपदस्थले चन्द्रसूर्य्योभयविषयकबोधः । पुष्पवन्तपदजन्योभवतु' इत्यस्य पुष्पवन्तपदमुभयविषयकबोधं जनयतु" इतीच्छायाः सङ्केतरूपत्वं, तदादिसर्व्वनामस्थले च स्वोच्चारणानुकूलबुद्धिप्रकारतावच्छिन्नविषयकत्व, स्वजन्यत्वोभयसम्बन्धेन बोधस्तत्पदवान् भवतु' इती च्छायाः अस्मत्पदादिस्थले' स्वोच्चारणकर्तृतावच्छेदकावच्छिन्नविषयकत्व—स्वजन्यत्वोभयस-म्बन्धेन बोधः अस्मत्पदवान् भवतु"। स्वसम्बोध्यतावच्छेकधर्म्मावच्छिन्नविषयकत्व-स्वजन्यत्वोभयसम्बन्धेन बोधः युष्मत्पदवान् भवतु" इतीच्छायाः सङ्केतत्वं बोध्यम्० ॥ * ॥ सङ्केतं विभजते० । तत्रेति, तयोर्म्मध्ये इत्यर्थः ॥ पारिभाषिकं लक्षयति० । तयेति, तया परिभाषयेत्यर्थः । काचकं लक्षयति० । शक्तिं लक्षयति० ईश्वरसंकेत इति० । ईश्वरत्वं सर्व्वविषयकनित्यज्ञानवत्वं, जगत्कर्तृत्वं वेति० । यः सर्व्वज्ञः सर्व्वविदिति श्रुतेः । यत इमानि भूतानि जायन्ते । येन वा जातानि जीवन्ति तद्ब्रह्मेति श्रुतेश्च०। तयेति,, तया शक्त्येत्यर्थः । वाच्यं लक्षयति तद्बोध्य इति० वाचकगवादिपदबोध्य इत्यर्थः 'मुख्यार्थं लक्षयति, स एवेति वाच्य एवेत्यर्थः ।एवकारेण लक्ष्यार्थ-परिभाष्यार्थयोर्व्यवच्छेदः । मुख्यार्थश्च शक्त्या प्रतिपाद्यः । वक्तिवाचकमित्यादितः

शाब्दबोधं दर्शयति, वाच्यवाचकादिपदइति० घटकत्वं सप्तम्यर्थः बोधजनकत्वेनेत्यत्र प्रकारत्वं तृतीयार्थः, तच्च निरूपितत्वसम्बन्धेन विषयत्वेऽन्वेति, अत्रैवेश्वरेच्छान्वितषष्ठ्यर्थनिरूपितत्वस्यान्वयः। ननु ग्रन्थक्रमेण वाचकवाच्यपदे इत्येव वक्तुमुचितमिति चेन्न, अल्पाच्तरमित्यनेन वाच्यपदस्यैव पूर्वनिपातसम्भवात्० । अथ गोपदं घटं वक्तीत्यस्यापि प्रामाण्यप्रसङ्गः, गो,घट, विषयकसमूहालम्बनबोधजनकत्वप्रकारतानिरूपितभगवदिच्छाविषयत्वस्य गोपदे सत्वात्" न च मुख्यविशेष्यताशून्यद्वयबोधजनकत्वप्रकारतानिरूपितभगवदिच्छाविषयत्वस्य धात्वर्थत्वात् समूहालम्बनबोधत्वार्थानन्तर्गतत्वान्न दोषः। न च तथापि पुष्पवन्तपदं चन्द्रसूर्य्यौ वक्तीति वाक्यात् शाब्दबोधानुपपत्तिस्तत्र नियमत उभयविषयकबोधस्यैवोपपत्तेः। किञ्च गामानयेत्यादिवाक्यजन्यकर्म्मत्वादिबोधे गोपदजन्यत्वस्य सत्वेन कर्म्मत्वबोधजनकत्वस्य गोपदे सत्वाद्गोपदं गां वक्तीतिवत् कर्म्मत्वं वक्तीत्यपि स्यादिति वाच्यम्" द्वितीयार्थगवान्वितविषयत्वस्य बोधेऽन्वये पारतन्त्र्येणबोधजन्यतायाः सवच्छिन्नत्वसम्बन्धेन भानं भवति,, एवञ्च कर्म्मत्वनिष्ठविषयत्वावच्छिन्नजन्यतानिरूपितजनकत्वस्य गोपदेऽसत्वेन निरुक्तेच्छाविषयकजन्यतायां गोनिष्ठविषयत्वावच्छिन्नत्वस्य सत्वेन कर्म्मत्वविषयत्वावच्छिन्नत्वस्य बाधात्० । अथ वा, अवच्छेदकतानिरूपितबोधनिष्ठजन्यतानिरूपितजनकताप्रकारतानिरूपितेच्छाविषयत्वस्य धात्वर्थत्वात्० ॥ धात्वर्थघटकावच्छेदकतायां प्रकृत्यर्थान्वितद्वितीयार्थविषयत्वस्य वृत्तित्वसम्बन्धेनान्वयात्' नोक्तदोषाणामवकाशइति० "कर्म्मप्रत्ययस्थले शाब्दबोधमुपपादयति"

पदेन गौरुच्यत इत्यादिना० । तादृशविषयताया इत्यस्य, बोधजनकत्वप्रकारतानिरूपितभगवदिच्छीयविषयताया इत्यर्थः ॥ परम्परानिरूपकत्वं स्पष्टयति. तच्चेति० "अयम्भावः" प्रकारत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयत्वसम्बन्धावच्छिन्नप्रकारतावत्त्वात्मकनिरूपकत्वैकदेशे धात्वर्थस्य तादृशभगवदिच्छीयविशेष्यत्वस्यान्वयः । धात्वर्थे च पदान्वितनृतीयार्थवृत्तित्वस्यान्वयः । तथाच, गोपदवृत्तिर्या बोधजनकत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यता तन्निरूपितप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतावत्त्ववान् गौरित्याकारकः शाब्दबोधः तत्र बोध्यः " इदं च गोपदं विषयितासम्बन्धेन गोविशिष्टबोधनिष्ठजन्यतानिरूपितजनकतावद्भवतु,, इत्याकारकेच्छाभिप्रायेणोक्तमिति बोध्यम्० । द्वितीयेच्छायाः सङ्केतत्वे शाब्दबोधमुपपादयति., वैपरीत्यमिति० वैपरीत्यस्य सङ्केततो धात्वर्थे वैपरीत्यमित्यर्थः । यत्तु" वैपरीत्यमित्यस्य कर्तृप्रत्ययस्थले परम्परया निरूपकत्वं कर्तृप्रत्ययार्थः,, आश्रयत्वं कर्म्मप्रत्ययार्थः "इति न शाब्दबोधानुपपत्तिः ॥ अन्यथा बोधविषयत्वप्रकारतानिरूपितविशेष्यत्वस्य पदे बाधाच्छाब्दबोधानुपपत्तिस्तत्तुच्छम्० कर्त्तुर्द्धात्वर्थत्वाश्रयत्वविरहे कर्त्तृत्वानुपपत्तिः कर्म्मणि तस्य सत्वेन कर्त्तृत्वापत्तेः, कर्म्मत्वानुपपत्तेश्च० ॥ अथ पदधर्म्मिकार्थविषयकबोधजनकत्वप्रकारकेश्वरज्ञानस्यैव विनिगमकाभावात्सङ्केतरूपतास्त्विति चेन्न वेदतात्पर्य्यज्ञाननिष्ठक्लृप्तहे-

तुतया च तथाविधात्मकसङ्केतज्ञानस्य हेतुत्वात्० अतिरिक्तहेतुत्वाकल्पनात्तथाविधज्ञानसङ्केतज्ञानस्यातिरिक्तकारणताकल्पनेन गौरवप्रसङ्गादिति दिक् ॥ सङ्केतेनेति,, अत्र न्यायसिद्धान्तोपरिमीमांसकानुयायिन इत्यस्याग्रिमवदन्तीत्यनेनान्वयः " अपभ्रंशादेर्व्वाचकत्वस्येष्टापत्तौ दोषान्तरमाह., साधुत्वं च स्यादिति,, साधुत्वञ्चात्र शक्तिभ्रमाधीननिरूढलक्षणेतरलक्षणाग्रहाधीनशाब्दबोधजनकत्वरूपं बोध्यम्० न च साधुत्वमपोष्टमिति वाच्यम् अपभ्रंशादेः साधुत्वे साधुभिः सम्प्रयोक्तव्यन्नापभ्रंशितमित्यस्यासङ्गतत्वापत्तेः अपभ्रंशादेरपि साधुत्वेन प्रयोगार्हत्वान्मिश्रमतमुपहसन्नाह"यत्त्विति" अतिव्याप्तिं वारयति, उच्चरितजातीयत्वेति० ॥ अथात्र "किमुच्चरितजातीयत्वम्" यदि चोच्चरितवृत्तिजातीयत्वं तदा सत्तागुणादिकमादायातिव्याप्तिः "न चोच्चरितवृत्तित्वविशिष्टजातिमत्वन्तदिति वाच्यम्,, भगवदुच्चरितवृत्तित्वविशिष्टजातेः अस्मदाद्युच्चरितादावसत्त्वेनाव्याप्तितादवस्थ्यादिति चेदुच्यते,, तादृशोच्चरितवृत्त्यानुपूर्व्वीमत्त्वस्य तथात्वात्० ॥ परिष्कृतेप्यतिव्याप्तिं प्रदर्शयति वेदस्थेत्यादि. वेदस्थलाक्षणिकेषु आयुर्व्वै घृतमित्यादिवेदघटकायुः पदे घृतपदे ष्वित्यर्थः आयुः पदस्यायुर्ज्जनके घृतपदस्य घृतकर्म्मकभक्षणे लक्षणा "तथा च,, घृतकर्म्मकं भक्षणमायुर्ज्जनकमित्यर्थस्तस्य घृतकर्म्मकार्थादिवाचकत्वापत्तिः घृतादिपदस्येत्युक्तम्० । ननु बोधो घृतकर्म्मकभक्षणविषयको भवतु घृतपदं तद्बोधजनकं भवत्विति भगवदिच्छाभ्युपगमे तदर्थविषयकत्वविशिष्टबोधजनकतात्वावच्छिन्नप्रकारताशालिनोच्छेत्युक्तावतिव्याप्त्यभावादाह सादीति० । अव्याप्तिं योजयति द्वा-

दशेत्यादिना द्वादशेऽह्नि पिता नाम कुर्यात्० कस्येत्याकाङ्क्षायां पुत्रस्य "तथाच" पुत्रपदं पुत्रत्वावान्तरधर्म्मावच्छिन्नपरम्० विषयत्वं विषयित्वं वा षष्ठ्यर्थः । नामपदं बोधजनकतावन्नामत्वव्याप्य धर्म्मावच्छिन्नविषयकसङ्केतपरम्० कृधात्वर्थः कृतिः । इष्टसाधनत्वं विध्यर्थः । अह्नीत्यत्राधिकरणत्वं सप्तम्यर्थः । "द्वादशाधिकरणकपुत्रत्वावान्तरत्वोपलक्षितधर्म्मावच्छिन्नविषयकबोधजनकतावन्नामत्वव्याप्यधर्म्मावच्छिन्नविषयकेष्टसाधनतावत्सङ्केतानुकूलकृतिमान्पितेहान्वयबोधः "अथ वा,, कृधातोरेव सङ्केतार्थः "तथा च,, तादृशः सङ्केतः पितृकर्तृक इत्यन्वयबोधः "स्वमते' सादिवेदत्तादिपदेऽव्याप्तिवारणं च, बुबोधयिषात्मकभगवदिच्छाविषयत्वस्य नामत्वव्याप्यधर्म्मावच्छिन्ने देवदत्तादौ सत्वेन बोध्यम्० "सादित्वं च" स्वतादात्म्य, स्वाश्रयध्वंससमानकालीनप्रागभावप्रतियोगिवृत्तित्वोभयसम्बन्धेन० धर्म्मविशिष्टधर्म्मवत्त्वं सजातीयध्वंसव्याप्यत्वमनादित्वं तदन्यत्वं वा सादित्वम्०"अथ वा" पदविशिष्टपदं सादिपदम्० स्वतादात्म्य, स्वजातीयध्वंसानधिकरणक्षणोत्पत्तिकत्वोभयसम्बन्धेनेति० अत्र मिश्रमतं मद्दूषितं तन्न सम्यक्., संसारस्यानादितयासादिपदस्याप्रसिद्धत्वात्० । संसारस्यानादित्वमुक्तमाचार्य्यैः "तथा हि,, प्रवाहोनादिमानेष न विजात्येकशक्तिमान्० । तत्त्वेयत्नवता भाव्यमन्वयव्यतिरेकयो,, रित्यनेन प्रथमस्तवके कुसुमाञ्जलाविति० । नैयायिकसिद्धान्तोपरि मीमांसकमतेन दोषमाह एवमिति" एतद्दोषमुद्धरयति "अथेति" शाब्दबोधोपयोगितायामित्यस्य शाब्दबोधजनकतावच्छेदककोटावित्यर्थः ।। ईश्वरो-

यत्वानुपादाने तात्पर्य्ये वृत्तित्वलक्षणातिव्याप्तिमाशङ्कते न चेति" । उत्तरयति "यतः पदार्थो व्यापारक इति ॥ मीमांसकमतसिद्ध-वृत्तिं दूषयितुं तन्मतं दर्शयति "यस्त्विति । ज्ञाने ( अर्थविषक-ज्ञाने ) अनुकूलत्वं सप्तम्यर्थः शक्तावन्वेति० । पदानामित्यत्र निष्ठत्वं षष्ठ्यर्थः सोपि शक्तावन्वेति "तथाच,, अर्थविषकशा-ब्दबोधानुकूला पदनिष्ठशक्तिरित्यर्थः ॥ वाचकत्वं लक्षयति तथा चेति० । तच्चेत्यस्य तद्वाचकत्वमर्थः । लाक्षणिकेऽतिव्याप्तिं वारयति "लाक्षणिकं चेति, ० ॥ नन्वेतन्मते ज्ञानस्य मितिमा-तृविषयकत्वेन मितिमातृविषयकघटशाब्दानुभवजनकत्वस्य घट-पदे सत्वात् घटपदं मितिमातृवाचकत्वापत्तिरतो वाचकत्वं परि-ष्करोति,, तद्विषयकत्वावच्छिन्नेति० । अथात्र विषयकत्वस्य प्र-त्यक्षादिसाधारणत्वेनातिप्रशक्त्या शाब्दनिष्ठजन्यतावच्छेदकत्वा-भावेनासम्भव इति चेन्न,, केवलविषयकत्वस्यातिप्रसक्तत्वेपि वि-षयकत्वशाब्दत्वयोरनतिप्रसक्तत्वेनावच्छेदकत्वध्रौव्यात्० । 'यथा, महानसीयवह्न्यभावप्रतियोगिताया अतिप्रसक्तत्वेपि वह्नित्वस्य महानसीयत्ववह्नित्वोभयस्मिन् तदवच्छेदकत्वं तथा प्रकृतेपीति० । न च पर्य्यायपदजन्यशाब्दबोधे व्यभिचारवारणाय कारणानन्त-र्य्यस्यावश्यं कार्य्यतावच्छेदककोटौ विवक्षणीयतया प्रयोजनविर-हेण विषयनिवेशस्यानावश्यकत्वात् ० । घटादिविषयकत्वेन शा-ब्दजन्यतानवच्छेदकत्वादसम्भवस्तदवस्थ एवेति वाच्यम्,. प-र्यायशब्दे शाब्दावैलक्षण्येनैकशक्तेरेव स्वीकारात्० ॥ घटपद-स्य कलशपदस्य च घटविषयकशाब्दानुकूलशक्तिमत्त्वेन कारण-त्वात् न दोषः ॥ न च घटपदं घटविषयकत्वावच्छिन्नशाब्दनि-

ष्ठजन्यतानिरूपितजनकतावच्छेदकशक्तिमदित्याकारकाप्रामाण्यज्ञानास्कन्दितज्ञानाच्छाब्दबोधवारणाय अप्रामाण्यज्ञानस्योत्तेजकत्वस्यावश्यकत्वेनैकरूपेण कथमपि कारणत्वस्य वक्तुमशक्यत्वेनाव्यवहितोत्तरत्वस्य कार्य्यतावच्छेदककोटावश्यं वक्तव्यमिति वाच्यम्० एतन्मते ज्ञानस्य स्वतः प्रामाण्यतया भूमत्वास्वीकारात्० ॥ एतेन पटपदे टघशक्तिभूमाच्छाब्दबोधान्त०भावेण व्यभिचारवारणाय कार्य्यतावच्छेदककोटावश्यमव्यवहितोत्तरत्वं निवेशनीयमित्यपि प्रत्युक्तम्० भूमात्मकज्ञानस्यैतन्मतेऽभावात्० ॥ घटादिपदे मितिमातृवाचकत्वं वारयति० मितिमातृविषयकत्वेन ज्ञानस्य न किञ्चित्पदशक्यतेत्यनेन "अयम्भावः" ज्ञानसामान्यसामग्र्या आत्ममनस्संयोगादेः तद्भासकत्वात् मितिमातृभासकत्वाच्छाब्दनिष्ठजन्यतायां मितिमातृविषयताया अनवच्छेदकत्वात्० ॥ ननु घटमानयेत्यादौ शाब्दबोधस्य कर्म्मत्वादिविषयकतया कर्म्मत्वविषयकत्वावच्छिन्नशाब्दानुकूलशक्तिमत्त्वस्य घटपदे सत्वेन कर्म्मत्ववाचकत्वापत्तिरित्यत आह पदान्तरस्य चेति" पदान्तरस्याम्पदस्य पदार्थान्तरभासकतया "तथाच, कर्म्मत्वविषयत्वावच्छिन्नशाब्दानुकूलशक्तिमत्त्वम्" अम्पदे न तु घटादिपदे इति.,न तत्र वाचकत्वापत्त्यवकाशः । प्रभाकरमतमुत्थापयति । कार्य्यान्वितेति० । गामनयेत्यत्र गवानयनं कार्य्यमित्यन्वयबोधे आनयनविषयतायां साक्षात्कार्य्यत्वविषयतानिरूपितत्वलाभार्थं साक्षादिति० । गवादिविषयताया परम्परया तन्निरूपितत्व-लाभार्थं परम्परेति० ॥ एतन्मते ,घटादिपदे कार्य्यत्वविषयत्वावच्छिन्नशाब्दजनकतावच्छेदकत्वसत्वात्कार्य्यतावाचकत्वमेतन्मते परिष्क-

रोति,, "तद्विषयत्वावच्छिन्नेत्यनेन० । "अयम्भावः" निरूपितत्वांशेऽविशेषणीभूय यन्निष्ठविषता यादृशजन्यतावच्छेदिका तादृशजन्यतानिरूपितजनकतावच्छेदकधर्म्मवत्वं तद्वाचकत्वं निष्कृष्टम्० ॥ एवञ्च कार्य्यत्वविषयतानिरूपितघटविषयकत्वावच्छिन्नजन्यतायां निरूपितत्वांशे विशेषणतयैव कार्य्यत्वविषयताया अवच्छेदकत्वं न त्वविशेषणतयेति न टघत्वादौ तद्वाचकत्वापत्त्यवकाशः । अथात्र विनिगमकाभावात् घटविषयतानिरूपितशाब्दं प्रत्यपि घटादिपदानां कारणता वक्तव्यतया तत्रापि तथाविधावच्छेदकत्वानपायादुक्तापत्तिर्दुर्व्वारेति चेन्न,, एतद्दोषस्यैव विनिगमकत्वात्० ॥ यद्वा कार्य्यत्वविषयतानिरूपितत्वानवच्छिन्नत्व,, कार्य्यत्वविषयतात्वपर्य्याप्तावच्छेदताकान्यत्वोभयाभाववती निरूपितत्वांशेऽविशेषणीयतद्विषयतानिष्ठा यादृशजन्यतावच्छेदकता भवति तादृशजन्यतानिरूपितजनकतावच्छेदकधर्म्मवत्त्वस्य विवक्षितत्वात्० ॥ तथाच,, घटविषयतानिरूपितकार्य्यत्वविषयत्वावच्छिन्नजन्यतावच्छेदकतायां कार्य्यत्वविषयतानिष्ठायां निरुक्तोभयस्यैव सत्त्वेन विनिगमकाभावप्रयुक्त-जन्यताया ग्रहणासम्भवान्नापत्तिरिति सुधियो विभावयन्तु शिवम्० ॥*॥

इति महामहोपाध्यायतार्किकमैथिल श्रीविश्वनाथशर्म्मरचित-मैथिलनैयायिकवैयाकरण, श्रीसङ्कमलालशर्म्म, श्रीसदाशिवशर्म्म, संशोधित-शक्तिवादविवृतिग्रन्थः समाप्तः

॥ शम्भूयात्० ॥

—०*०—

॥ श्रीगणेशाय नमः ॥

विश्वनाथं नुतं विश्वनाथान्वितं विश्वनाथासुतं विश्वनाथः सुतम्०।
विश्वनाथोपमं विश्वनाथप्रभुं कर्त्तुमुच्चर्करीति प्रणम्याऽऽधियाम्०१॥
व्युत्पत्तिवादविवृतिग्रन्थं श्रीमिथिलेश्वरात्० ।
आज्ञां प्राप्यसुविश्वेशेशमैथिलगुणागूणीः ॥ २ ॥

शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते इति गादाधरी" एतद्वाक्याच्छाब्दबोधोत्तरसप्तम्या वृत्तित्वं निरूपितत्वञ्चाँर्थ, स्तयोर्भासधात्वर्थविषयताया मन्वयोऽत्रैव च संसर्गमर्यादापदार्थाकाङ्क्षाप्रयोज्यविषयत्वान्विततृतीयार्थाभेदस्या न्वयोऽथवा संसर्गमर्यादापदार्थाकाङ्क्षान्वितप्रयोज्य त्वस्य तृतीयार्थस्य तत्रान्वयः तस्य चाख्यातार्थाश्रयत्वेऽन्वयः तस्य च सप्तम्यन्तार्थैकपदार्थानुयोगिकत्वान्वितषष्ठ्यन्तार्थापरपदार्थप्रतियोगिकत्वान्वित संसर्गपदार्थेऽन्वयः" तथाच,, एकपदार्थानुयोगिकत्वविशिष्टापरपदार्थप्रतियोगिकत्वविशिष्टः संसर्गः शाब्दबोधनिरूपिताकाङ्क्षाप्रयोज्यविषयत्वाभिन्नविषयताश्रयत्ववानित्याकारकः शाब्दबोध इति ॥ अथात्रापरत्वंयदि एकपदभिन्नत्वन्तदा एकत्वत्वेनैकत्वस्य सर्वत्र सत्वेनैकपदत्वावच्छिन्नप्रतियोगिताकभेदस्य पदेऽसत्वेनासम्भवप्रसङ्गात् इत्युच्यते तदा पदविशिष्टः संसर्गः निरुक्तविषयताश्रयत्ववानितिपरमार्थः वैशिष्टयञ्च,, स्वार्थानुयोगिकत्व, स्वभिन्नपदप्रतिपाद्यार्थप्रतियोगिकत्वोभयसम्बन्धेन,, स्वमत पदमेतल्लाभायैव चैकपदमिति न तद्वैपर्थ्यशङ्कापि "ननु पचतीत्यत्र एवमेवकारस्थले आख्यातार्थयत्नवर्तमानत्वयोश्च यः स्वरूपसम्बन्धः स कथं शाब्दबोधे भासितुं

समर्थस्तस्य निरुक्तोभयसम्बन्धेन पदविशिष्टाभावादिति चेन्न एकपदार्थविशिष्टसंसर्ग इत्यादिरीत्या विवक्षितत्वात् 'वैशिष्ट्यञ्च' स्वानुयोगिकत्व स्वभिन्नपदार्थप्रतियोगिकत्वोभयसम्बन्धेन स्वम-त्रार्थपरं 'तथाच'यत्न वर्तमानत्वयो र्भेदान्न दोषः ॥ न च नीलोघट इत्यादावगतिः घटेनीलभेदवाधादिति वाच्यम्पदार्थतावच्छेदक-विशिष्टः संसर्ग इत्यादिक्रमेण विवक्षितत्वात् 'वैशिष्ट्यञ्च' स्वाव-च्छिन्नानुयोगिकत्व स्वभिन्नपदार्थतावच्छेदकधर्मावच्छिन्नप्रति-योगिकत्वोभयसम्बन्धेन स्वमत्र पदार्थतावच्छेदकपरन्तथाच घट-त्वनीलत्वयो र्भेदान्नोक्तागतिरिति 'न च' विधेयांशेऽधिकावगा-हिशाब्दानुभवस्य नवीनैः स्वीकारात्" घटोनीलघट इत्यादौ जातित्वविशिष्टजातिमत्परकसर्वनामघटितसघट इत्यादौ चागतिः घटत्वभेदस्य घटत्वे वाधात्" एवञ्चैतस्य गुरुकुलमित्यादौ निरू-पितत्वसंसर्गे पदार्थतावच्छेदककुलत्वावच्छिन्नानुयोगिकत्वाभा-वाच्चागतिरेवं धान्याद्धनमित्यादौ विभक्तेः साधुत्वार्थकतानाम-प्रयोज्यत्वस्य संसर्गतया भानसम्भवात्'धान्यत्वे धान्यत्वभेदविर-हात् एवङ्कुलात्कुलमित्यादौ देहाद्देहोऽभिजायत इत्यत्र च जन्य-त्वसंसर्गस्य भानानुदयप्रसंगाच्चेति वाच्यं पदजन्यप्रतिपत्तिविष-यताविशिष्टसंसर्गता इत्यादि रीत्यावक्तव्यत्वात् 'वैशिष्ट्यञ्च स्वा-श्रयानुयोगिकत्वस्वविशिष्टविषयताश्रयप्रतियोगिकत्वोभयसम्ब-न्धेन सम्बन्धघटकवैशिष्ट्यञ्च स्वभिन्नत्व,स्वप्रयोजकपदसाकाङ्क्ष-पदप्रयोज्यत्वोभयसम्बन्धेन स्वंविषयता विशेष्यतात्मकविषयता-मादाय सर्वत्र समन्वयान्न दोष इति,, ननु समवायस्यैकत्वनये घट-त्वसमवायस्यापि घटपदजन्यप्रतीतीयघटत्वावच्छिन्नविषयताश्र-

यानुयोगिकत्वस्य घटपदसाकाङ्क्षस्वपदप्रयोज्यैकत्वविषयताश्रय-प्रतियोगिकत्वस्य च सत्वादाकाङ्क्षाभास्यत्वं स्यात्तथाच किन्तत्र शक्तिकल्पन इति चेन्न एकपदार्थ इत्यत्र सप्तम्यर्थो विशेष्यताऽपरपदार्थस्येत्यत्र षष्ठ्यर्थः प्रकारता तयोर्लक्षणया संसर्गपदार्थे संसर्गविषयत्वे निरूपितत्वसम्बन्धेनान्वयः तत्रैव च शाब्दबोधनिरूपिताकाङ्क्षाप्रयोज्यविषयत्वाभेदस्य चान्वयः । तथा च पदजन्यप्रतितीयविषयताविशिष्टसांसर्गिक विषयताकाङ्क्षा-प्रयोज्यशाब्दबोधनिरुपितविषयत्वाभिन्न इति पर्य्यवसितोर्थः वैशिष्ट्यञ्च स्वनिरूपितत्व स्वविशिष्टविषयता निरूपितत्वोभयसम्बन्धेन सम्बन्धघटकवैशिष्ट्यञ्च स्वभिन्नित्व स्वनिरूपितपदसाकाङ्क्षपदप्रयोज्यत्वोभयसम्बन्धेन स्वम्विषयता प्रकारताभेदेन सांसर्गिकविषयतायां भिन्नत्वेन एकत्वविषयतानिरूपितसमवायनिष्ठसांसर्गिकविषयतातोघटत्वनिष्ठप्रकारतानिरुपितसमवाय निष्ठसांसर्गिकविषयताया भिन्नत्वात् तत्र च शक्तेस्स्वकारस्यावश्यकत्वादिति प्रकारतानिरूपितत्वस्य सांसर्गिकविषयतायामनभ्युपगमे संयोगेन पर्वते वह्निरवृत्तिरिति बुद्धिप्रति समवायेन पर्वतोवह्निमान्नितस्यापि प्रतिबन्धकत्त्वापत्तेः प्रतिबन्धकता च वह्नित्त्वावच्छिन्नप्रकारतानिरूपित, पर्वतत्वावच्छिन्नविशष्यताशालिनिश्चयत्वेनैवातो न दोषः 'विशेष्यतानिरूपितत्वस्य सांसर्गिकविषयतायामनभ्युपगमेनायोग्यत्वादिति वाच्यम् संयोगेन वन्ह्यभाववान्निति बुद्धित्वावच्छिन्नम्प्रति संयोगेन बह्निमान्पर्वत इति ज्ञानस्यैव स्वसंयोगिसंयोगेन बह्निमान् पर्वत इति निश्चयस्य प्रतिबंधकत्वापत्तिभिया तदावश्यकत्वात्संयोगत्वमात्रावच्छिन्नत्वस्य संसर्गतायां निवेशे

महानसीयसंयोगेन वह्निमान्पर्वत इति ज्ञानस्य प्रतिबन्धकत्वानुपपत्तिः इति पक्षता सिद्धान्तसारे विस्तरेण० । शाब्दबोधे चेत्यत्र चस्त्वर्थे तथा चायम्भावः । अनुमितौ सांसर्गिकविषयतायाः प्रयोजकत्वं यथा परामर्शीयविषयतायास्तथा प्रकृते शाब्दबोधे सांसर्गिकविषयतायाः प्रयोज्यत्वन्न शक्तेतज्ज्ञानीय विषयतायाः किंतु आकाङ्क्षाज्ञानस्यैवेति,, अत एवान्विताभिधानवादिमते शाब्दबोधे चेत्यपि गून्थादौ सङ्कुचते येषां संसर्गतायां विवादस्तेषां स्वमते संसर्गत्वसूचनाय,, विशेषोल्लेखमाह सत्वविषयेत्यादिना "आदिना" जन्यजनकभावादीनां परिग्रहः । तथा च घटं पश्यति ग्रामं गच्छति इत्यादौ कर्मत्वे आधेयत्वस्य चैत्रस्य धनमित्यादौ आश्रयत्वात्मकाधारत्वस्य घटः पटो नेत्यादौ नञर्थभेदे प्रतियोगित्वस्यानुयोगित्वस्य वा सन्प्रत्ययार्थेच्छायां विषयत्वस्य विषयित्वादेर्वा चिकीर्षति बुभुक्षत इत्यादौ गमधात्वर्थव्यापारे जनकत्वस्य गमधात्वर्थे फले व्यापारस्य कर्तृप्रत्ययस्थाने कर्मप्रत्ययस्थले शाब्दबोधे घट ग्राम पट कृतिभोजनफलव्यापारसंसर्गमर्यादयाभानमित्यग्रे मूले व्यक्तीभविष्यतीति भावः । स्वसमानविभक्तिकत्वं च विभक्तिविभाजकप्रथमात्वादिनेति गादाधरी, ननु विभक्तिविभाजकधर्म्मादिनेत्येवोक्त्या सर्वसामञ्जस्येऽलं प्रथमात्वादिनेत्युक्त्या इति चेन्न (संख्यात्वव्याप्य सामान्ये शक्तिमान् प्रत्ययस्तु यः०। सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङौ चेति भेदत, इत्यनेन) विभक्तिश्च सुप्तिङ्भेदेन द्विधा इत्यग्रिमग्रंथेन च विभक्तिविभजनात् । विभक्तिविभाजकत्वं" सुप्तिङ्त्वे च प्राप्तमिति सुप्त्वादिना स्वुवविभक्ति-

साजात्यस्य ङस् विभक्त्यादौ सत्त्वेन नीलस्य घट इत्यादौ नीलघटयोरभेदान्वयप्रसङ्गात्" प्रथमात्वादिनेत्यभिधानस्यावश्यकत्वं तथा च विभक्तिपदं सुप्परमिति सुब्विभाजकधर्म्मादिना साजात्यस्य नाभावान्न दोषः । न च किंतत्सुब्विभाजकत्वं,, येन सुप्त्वस्य सुब्विभाजकधर्म्मपदेन गृहीतुं न शक्यते इति वाच्यम् । सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्याव्याप्यत्वस्य तदर्थत्वात्" स्वस्मिन् स्वव्याप्यत्वविरहान्न सुप्त्वे सुब्विभाजकत्वमित्यदोषात्० ॥ न च स्वाभाववदवृत्तित्वस्य स्वव्याप्यत्वस्य स्वस्मिन्नपि सत्वादिति वाच्यम् । स्वभिन्नत्वे सति स्वाभाववदवृत्तित्वस्य, स्वसमानाधिकरणत्वे सति भेदप्रतियोगितावच्छेदकत्वस्य वा प्रकृते व्याप्यत्वपदेन विवक्षितत्वात्" स्वस्मिन् स्वभिनत्वविरहेण समानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य च विरहेण स्वस्मिन् स्वव्याप्यत्वविरहान्न दोष इति,, न च सुप्त्वव्याप्यस्य प्रथमा, द्वितीयान्यतरत्वस्य व्याप्यत्वं, प्रथमात्वेप्यस्तीति सुप्त्वव्याप्याव्याप्यत्वस्य प्रथमात्वे विरहेणासम्भवप्रसङ्गादिति वाच्यम्, सुप्त्वव्याप्यजात्यव्याप्यत्वस्य विवक्षितत्वादन्यतरत्वे जातित्वविरहेणासम्भवानवकाशात्" भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वमन्यतरत्वमखण्डोपाधिर्वा० न च सुप्त्वव्याप्यत्वस्य तादृशाव्याप्यत्वस्य प्रथमाषष्ठ्यन्यतरत्वे सत्वेन तस्यापि विभक्तिविभाजकधर्म्मपदेन धर्त्तुं शक्यतया नीलस्य घट इत्यादावुक्तदोषस्य तादवस्थ्यादिति वाच्यम् । सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्यजात्यव्याप्यत्वे सति जातित्वस्य सुब्विभाजकत्वेत्यनेन विवक्षितत्वात्तथा च, स्वप्रकृतिकविभक्तिवृत्तित्वोपलक्षितविभक्तिविभाजकधर्म्मवद्विभक्ति-

प्रकृतित्वं,, स्वसमानविभक्तिकत्वस्य फलितमिति दिक् ॥*॥ मैवं,. विशेष्यवाचकपदोत्तरविभक्तितात्पर्य्यविषयसंख्याविरुद्ध-संख्याया यत्राविवक्षितत्वमिति "गादाधरी"। अथात्र विशेष्य-वाचकपदोत्तरं यत् तत्तात्पर्य्यविषयसंख्याविरुद्धेत्यादिरीत्या वि-वक्षणादेव सर्वसामञ्जस्ये ऽलंविभक्तिपदोपादानेनेति चेन्न, दधिप्र-मेयं वस्तुप्रमयश्च, इत्यादौ विशेष्यवाचकदधि. वस्तुपदोत्तरप्रमेय, वस्तुतात्पर्य्यविषयसंख्याविरुद्धसंख्याया अप्रसिद्ध्या समानवचन-त्वासम्भवादतस्तदुपात्तं 'तथा'च प्रमेयपदस्य विभक्तित्वाभावान्ना-प्रसिद्धिरिति" "नत्वविशेष्यवाचकपदोत्तरविभक्त्यर्थसंख्यावि-रुद्धेत्यादिकमेवोच्यतामलं तात्पर्य्यविषयपर्य्यंतानुशरणेनेति चे-न्न., सुपांसुवित्यनेन सुब्विभक्त्यर्थत्वस्य शक्त्या लक्षणया वा एकत्वइवद्वित्ववहुत्वेपि सत्वात्। विभक्त्यर्थभिन्नत्वस्य सं-ख्यायामसत्वादेवं जस्‌विभक्तेरपि वहुत्ववदेकत्वद्वित्वार्थकत्वात् जस्‌विभक्त्यर्थभिन्नसंख्याया अप्रसिद्धत्वाद्सम्भवप्रसङ्गादत-स्तात्पर्य्येति, केचित्तु। यत्र वहुत्वतात्पर्य्येण सुपदप्रयोगो भ्रान्त-स्य यथा वेदाः प्रमाण न्तत्र भ्रान्तपुरुषस्य वेदः प्रमाणमिति वा-क्याच्छाब्दबोधो भवति तदानीं विशेष्यवाचकपदोत्तरसुविभक्त्य-र्थ एकत्वभिन्नसंख्यायाः द्वित्ववहुत्वादे र्विशेषणवाचकपदोत्तरवि-भक्त्या अविवच्छितत्वात्तदनुपपत्तिरत स्तदुपस्तमित्याहुः 'नन्वत्र-विरुद्धत्वमेकाधिकरणावृत्तित्व न्तच्च न घटत्वे यतो वहुत्वाधिक-रणे वेदे स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन प्रमाणपदोत्तर-विभक्त्यर्थस्यैकत्वस्यापि सत्वादिति चेन्न प्रकृते विरुद्धत्वन्नैका-धिकरणावृत्तित्वं'किन्तु'भिन्नत्व न्तथा च लक्षणया विरुद्धपदस्य

भिन्नार्थकत्वे तादृशसंख्याभिन्नसंख्येति पर्य्यवसितोर्थो बोध्यः॥ केचित्तु साक्षात्सम्बन्धेन वृत्तित्वस्य विवक्षणे प्रमात्वगतैकत्वस्य प्रमाणे तेन सम्बन्धेनासत्वात् यथाश्रुतस्यैव सम्यक्त्वादित्याहुः॥ ननु'यत्र'विशेषणवाचकपदोत्तरविभक्त्यर्थ" संख्याया अविवक्षितत्वन्तत्रैव समानवचनत्व मित्युक्त्यैव सर्व्वत्र सामञ्जस्ये विरुद्धान्तविशेषणमनर्थकमिति चेन्न प्रमाणपदोत्तरबहुत्वयिवक्षायामपि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्येव साधु न तु प्रमाणमपि" इदानी न्तस्यापि प्रमाणत्वं स्यात् अतो विरुद्धेति, तथाच प्रत्यक्षानुमानोपमानशब्दोत्तरजस्विभक्तितात्पर्य्यविषयबहुत्वविरुद्धत्वस्य बहुत्वेऽसत्वात्सत्वाच्च एकत्वादौ तस्य प्रकृतेऽविवक्षितत्वात्समानवचनत्वं तत्र निराबाधमिति एवं घटो घटपदार्थ इत्यत्र पदार्थत्वे एकत्वविवक्षायामपि समानवचनत्वमन्यथा" विशेषणपदोत्तरविभक्त्या एकत्वस्य विवक्षितत्वादसम्भवादिति विरुद्धान्तनिवेशः॥ ननु मृदुपचतः मृदुपचावित्यादौ विशेषणवाचकपदोत्तरविभक्त्या संख्याया अविवक्षितत्वात्तत्र समानवचनत्वविरहात्कथं तादृशनियमोपपद्यत इति चेन्न विशेष्यवाचकपदोत्तरविभक्तितात्पर्य्यविषयविशेष्यगतसंख्याविरुद्धसंख्यायाः यत्राविवक्षितत्वमित्यस्य विवक्षितत्वात्तथा प्रकृते विशेष्ये धात्वर्थे संख्याया अनन्वयादस्य एतन्नियमानाक्रान्तत्वादिति भावनीयम् (अथ त्रिभुवनजयलक्ष्मीर्म्मैथिली तस्य दारा) इत्यत्र दारपदोत्तरविभक्त्यर्थस्य बहुत्वस्याविवक्षितत्वात्तथा चात्राविवक्षितत्वस्य सत्वेन समानवचनत्वस्याभावेन व्यभिचारप्रसङ्ग इति चेन्न, दार इत्यस्यैव विशेष्यवचनत्वम् तथा च विशेष्यवाचकपदोत्तरजस्विभक्तिता-

त्पर्य्यविषयत्वस्य संख्यायामभावेन विशेष्यवाचकपदेन दारापदस्य धर्तुमशक्यत्वेन नियमानाक्रान्तत्वात्" नियमस्तु व्याप्तिः "सा च" विशेष्यवाचकपदोत्तरतात्पर्य्यविषयसंख्याविरुद्धसंख्याया विशेषणवाचकपदोत्तरविभक्त्या अविवक्षितत्वात् ॥ व्यापकस-मानवचनत्व सामानाधिकरण्यरूपा सा च निराबाधेति दिक्० ॥ वेदाः प्रमाणमित्यत्र विशेषणपदोत्तरबिभक्त्या बहुत्वविरुद्धमेकत्वं धिवक्षितम् " तच्च " प्रकृत्यर्थतावच्छेदकप्रमितिकरणत्वेऽन्वेति-शाब्दप्रमितिकरणत्वं शब्दत्वावच्छिन्नयावच्छब्दनिष्ठमेकमेवेति नायोग्यतेति'गादाधरी' अथ प्रमाणे अनेकैकत्वान्वयसम्भवात्कथम योग्यतेति चेन्न न हि एकत्वत्वावच्छिन्नमेकवचनार्थः अपि तु स-जातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपसजातीयद्वितीयरहि-तत्वं 'साजात्यं च' समभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थ-तावच्छेदकरूपेण 'अत एव चाग्रे ग्रन्थे स्पष्टमभिधानात्तथा च, चालि-नीन्यायेन प्रमाणगतैकत्वे तादृशभेदप्रतियोगितावच्छेदकत्वस्यैव सत्वादनवच्छेदकत्वस्य विरहेणायोग्यत्वप्रसङ्गात् ॥ न च तादृश प्र-कृत्यर्थतावच्छेकरूपेण सजातीयप्रमाणप्रमाणत्वगतैकत्वस्यासत्वेन तत्रापि सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वविरहेणायोग्य-त्वस्य तथाप्यनुद्धार इति वाच्यम्, यत्र प्रकृत्यर्थतावच्छेदके संसर्गे स्वार्थान्वयस्तत्र सामानाधिकरण्यघटितसानाधिकरण्यसम्बन्धने स-मभिव्याहृतपदार्थसंसर्गित्वविशिष्टस्वार्थानुयोगितावच्छेदकरूपेण साजात्यं तथा च प्रकृते वेदानुयोगिकाभेदसंसर्गित्वविशिष्टप्रमाण-त्वरूपेण सजातीयत्वात्० ॥ वस्तुगत्या वेदनिष्ठप्रमाणत्वं तद्वृत्तिभे-दप्रतियोगितानवच्छेकत्वस्य एकत्वे सत्वेन योग्यत्वस्याक्षतत्वादत

एव 'चार्व्वाकादिनिर्म्मित आगमे' अयोग्यशंकानिराशार्थमेवैकवचन-प्रयोग इत्यपि साधु संगच्छते अत एव वाचस्पतिमिश्रैः शाक्यभिक्षुकनिर्ग्रन्थिकसंसारमोचकादीना मागमाभासाः परिकृताभवन्तीत्यत्रागमाभासत्वं सांख्यतत्वकौमुद्यां तदपि संगच्छते प्रामाण्याभावेनाभासत्वस्य तत्राक्षतत्वात् ॥ न च वेदानुयोगिकभेदविशिष्टप्रमितिकरणतात्वस्य चार्वाकाद्यागमनिष्ठप्रमितिकरणतायां विरहेण तस्य सजातीयानन्तर्गतत्वात् स्वातन्त्र्येण तेषामागमे प्रामाण्यसत्वेपि तादृशैकत्वस्य प्रकृते प्रमितिकरणतायां सत्वात्कथं तेषामागमे प्रामाण्यशङ्का निराकृताभवतीति वाच्यं प्रकृते स्वार्थानुयोगितावच्छेदकरूपेणैव साजात्यं तथा च यदि चार्वाकाद्यागमे प्रामाण्यं स्यात्तदा साजात्यन्तत्राक्षतन्तन्निष्ठभेदप्रतियोगितानवच्छेदकमेकत्वन्नभवेत्तदेव नेति एकवचनेन दृढतरं कृतं, न च स्वार्थानुयोगितावच्छेदकप्रमितिकरणतात्वं अनुमितिकरणतायां सत्वेन तद्धति भेदप्रतियोगितानवच्छेदकत्वस्य प्रकृते एकत्वे विरहेणायोग्यत्वन्तादवस्थ्यमेवेति वाच्यं एतदस्वरसेन शब्दत्वावच्छिन्नयावच्छब्दनिष्ठमेकमेव शाब्दप्रमाकरणत्वमित्युक्तं तथाचायम्भावः ॥ अनुयोगितावच्छेदकं शब्दत्वावच्छिन्नशाब्दप्रमितिकरणत्वं तच्च, नानुमितिप्रमितिकरणतायामस्तीति नायोग्यतेति ॥ केचित्तु प्रमितिकरणत्वे अन्वेतीत्यस्य प्रमितिकरणत्वघटकप्रमितावत्वे इत्यर्थः ॥ तथाचायं भावः, सकलवेदानां संसारनिदानमिथ्याज्ञानोन्मूलनक्षमे परमात्मकनुभवे तात्पर्यं नत्वनेकवैजात्यविशिष्टानेकानुभवे इति अथ सकलवेदजन्यपरमात्मविषयकज्ञानस्यापि व्याससुकवामदेवादिभेदेन नानात्वात्कथं तादृशैकत्वान्वययोग्यतेति चेन्न,,

प्रमितित्वे एकत्वस्याबाधादत एव दशमस्त्वमसीति वाक्यात् प्रत्य-क्षात्मिकाप्रमितिजन्यतेति॰वेदे प्रत्यक्षप्रमितिकरणत्वमभ्युपगच्छ-ताम्मतमपाकर्त्तुमेकवचनप्रयोगः 'साध्वीति, न च इषेत्वेत्यादिमंत्रा-णां सहस्रशीर्षापुरुषसूक्तानां अग्नीषोमीयं पशुमालभेदित्यादि वा-क्यानां विभिन्नप्रतिपादकानां कथं परमात्मपरतेति वाच्यं यथा नि-गमनार्थ विशिष्टविषयकबोधजनयतोपि प्रतिज्ञादेः तत्तद्वाक्यप्रयो-जकाकाङ्क्षोत्थापकतया इह धूम इति वचनसामानुमानोक्तवह्नि-धोपरतावत्तद्विशिष्टार्थविषयकबोधपरत्वं तथा परस्परमन्त्राणां तत्त,द्वाक्यानां चाकाङ्क्षात्थापकतया परमात्मबोधपरतानिर्व्वहत्येवं-सर्व्ववेदा यत्पदमामनन्तीति श्रुत्या वेदानां परमात्मपरत्वस्याक्षत-त्वात् इत्याहुरिति दिक् ।। अथ तत्तदर्थान्विततत्तदर्थविषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति तत्तत्पदसाकाङ्क्षतत्तत्पदत्वेन का-रणत्वाच्छाब्दस्य वह्निना सिंचतीत्ययोग्यशब्दापभ्रंशशब्दसा-धारणत्वेनातिप्रसक्ततया प्रमितिकरणतानवच्छेदकत्वात्कथं शब्द-त्वावच्छिन्नप्रमितिकरणतेत्युक्तं एवं शब्दत्वं न कमपि शाब्दं प्रति-जनकतावच्छेदकं अतिप्रसक्तत्वादिति चेन्न सकलवेदतात्पर्य्यार्थ-विषयकविजातीयप्रमितित्वावच्छिन्नं प्रति स्वतंत्रपुरुषोच्चरित-शब्दत्वावच्छिन्नप्रमितिकरणत्वमेकमेवेति न काप्यनुपपत्तिरिति ।। वेदत्वं च,, स्वतन्त्रपुरुषोच्चरितशब्दत्वं "अथवा" शब्दतदुपजीवि-प्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्य-वाक्यार्थज्ञानजन्यप्रमाणशब्दत्वं इति सजातीयोच्चारणानपेक्षोच्चरि-तजातीयत्वविवक्षावेदत्वमित्यधिकं मदीयसर्व्वसंग्रहे आलोचनीय-मिति ।। न च पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशे इति

व्युत्पत्तिविरोधः ॥ सम्पन्नो व्रीहिरिति अनेकव्रीहितात्पर्य्यकेप्येकवचनदर्शनेन तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वादिति गादाधरी । अत्र पदार्थत्वमाश्रयत्वसम्बन्धावच्छिन्नपदजन्यबोधविषयत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यत्वं "अन्यद्वेतीत्यन्यदेतत्" संकोचश्चात्र तदर्थविशेष्यकतत्पदवृत्तिज्ञानजन्यत्वस्य कार्य्यतावच्छेदके निवेशेन बोध्यः 'तथा च' तत्पदविशेष्यकतत्पदवृत्तिज्ञानजन्यतदर्थोपस्थित्यव्यवहितोत्तरजायमानशाब्दबुद्धित्वावच्छिन्नं प्रति तदर्थविशेष्यकतत्पदवृत्तिज्ञानजन्यतदुपस्थितित्वेन कारणत्वं बोध्यम् ॥*॥ S. Sadashib jha. ॥*॥

अथ वेदाः प्रमाणमित्यस्य एकत्वविवक्षायां प्रामाण्योपपादने एकत्वविवक्षायां घटाः नील इत्यस्यापि प्रामाण्यं स्यात् तद्युक्तेस्तौल्यादिति चेदत्र काशीस्थाः दाक्षिणात्यादयः । विभक्त्यर्थैकत्वस्य स्वाश्रयसमानाधिकरणोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसम्बन्धेन, 'प्रकृत्यर्थतावच्छेदके' 'अथवा" तादृशानवच्छेदकप्रकृत्यर्थतानवच्छेदकवत्त्वसम्बन्धेन प्रकृत्यर्थेऽन्वयसम्भव,, स्तथा" च, एकत्वाश्रयनीलसमानाधिकरणत्वोपलक्षितघटत्वाधिकरणपीतवृत्तिभेदप्रतियोगितानवच्छेदकत्वस्य नीलत्वे बाधात् नैकत्वान्वयविवक्षा सम्भवतीति,, न घटानील इत्यस्य प्रामाण्यं० । एकत्वाश्रयप्रमाणत्वसामानाधिकरण्यस्योपलक्षितवेदत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वस्य प्रमितिकरणत्वेनान्वययोग्यत्वस्याक्षतत्वादित्याहुस्तन्न घटाः प्रमेयो वाच्यो घटः कम्बुग्रीवादिमान् घट इत्यादेरेकत्वविवक्षायां प्रामाण्यं स्यात् युक्तेस्तौल्यात्० ॥ "वस्तुतस्तु" ब्राह्मणत्वसमा-

नाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य शतत्वे सत्वेन एवं वि-श्वदेवत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य पुरोरवमा-द्रवसोभयगतद्वित्वे सत्वेन शतत्वे एकत्वान्वयस्य पुरोरवमाद्र-वसोभये द्वित्वान्वयस्यायोग्यतया शतं ब्राह्मणाः पुरोरवोमाद्रव-सविश्वे देवा इत्यस्य चाप्रामाण्यप्रसङ्गात्॥*॥"अथात्र मैथिलाः" नीलो घटा इत्यादौ नीलपदस्य नीलगुणविशिष्टे लक्षणा लक्ष्य-तावच्छेदकस्य नीलस्यानेकत्वेन सजातीयद्वितीयराहित्यात्मकैक-त्वस्यान्वययोग्यतायाः विरहेण प्रामाण्याभावान्न दोषः ॥ लक्ष्य-तावच्छेदकतावच्छेदकनीलत्वजातौ एकत्वस्य सत्वेपि तदर्थताव च्छेदकतावच्छेदके विभक्त्यर्थान्वयस्यादृष्टचरत्वात् । दृष्टचर-त्वे वा तत्र एकत्वविवक्षायाः किं प्रयोजनं तद्वक्तव्यं यथा पशु-नायजेतेत्यादौ नानापशुकरणकयागजन्यादृष्टिसिद्धिर्म्मा भवत्वे-तदर्थं यथा जात्याकृतिविभक्तयः पदार्थ इत्यत्र शक्तित्रयशङ्का-निराशार्थं 'सम्पन्नो व्रीहिरित्यादौ यवादिसम्पन्नत्वशंकानिराशा-र्थंत्रयः समुदिता हेतुरित्यत्र यथा तृणारणिमणिन्यायेन हेतुत्वशं-ङ्कानिराशार्थं एकत्वविवक्षादरस्तथात्र नास्त्येव मुक्तलज्जैस्तैर्व्वक्त-व्यमिति एकत्वस्याविवक्षितत्वात्समानवचनत्वमेव तत्र, नत्वसमा-नवचनत्वमिति नाप्रामाण्यशङ्काकलंकोपीति प्राहुः,, ननु प्रमिति-करणत्वं वेदेन प्रमित्यव्यवहितपूर्व्वक्षणावच्छेदेन प्रमितिसमाना-धिकरणात्यन्ताभावाप्रतियोगित्वं चालिनीन्यायेन सकलवेदे ता-दृशाभावप्रतियोगित्वस्यैव सत्वात्किन्तु तादृशाभावप्रतियोगिता-नवच्छेदकधर्म्मवत्वं स च सर्व्वधर्म्मवेदशब्दत्वमिति वेदशब्दत्वा-त्मकप्रमितिकरणतायाः अविवक्षितत्वं कथं वेदशब्दत्वेन हि स्व-

स्यावच्छेदकत्वं स्वस्मिन्नात्माश्रयप्रसङ्गादिति चेन्न,, उपहितानुपहितभेदेनावच्छेद्यावच्छेदकभावोपपत्तेरिति ध्येयम्॥*॥ अथ सम्पन्नो व्रीहिरित्यत्र कथमेकत्वस्य व्रीहित्वेऽन्वयः निर्द्धर्म्मितावच्छेदककशाब्दबोधस्यानभ्युपगमात्" ०। विशिष्टबुद्धित्वावच्छिन्नं प्रति धर्म्मितावच्छेदकरूपेण धर्म्मिण उपस्थितेः कारणस्य विरहाच्चे ति चेन्न. व्रीहिपदस्य व्रीहित्वत्वविशिष्टे लक्षणामभ्युपेत्योक्तत्वादनभ्युपगमेत्वाह यदि च स्वाश्रयप्रकृत्यर्थतावच्छेदकसम्बन्धेनेत्यादि अथ लक्षणापक्षे व्रीहित्वे कथमेकवचनार्थस्य वक्ष्यमाणस्यान्वयः समभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकव्रीहित्ववन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य एकत्वे बाधात्तथाविधि एकवचनार्थस्याप्रसिद्धत्वादिति चेन्न,, यत्र प्रकृत्यर्थे अन्वयस्तत्र तादृशप्रकृत्यर्थतावच्छेदकरूपेणैव साजात्यं 'यत्र प्रकृत्यर्थतावच्छेदकेऽन्वय स्तत्र तादृशसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकतावच्छेदकरूपेणसाजात्यं अविवक्षितत्वात् तथाच नाप्रसिद्धिरिति ध्येयम् ॥ ननु द्वितीयपक्षे स्वसजातीयव्रीहिनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य व्रीहित्वगतैकत्वे सत्वेनाप्रसिद्धिभिया भेदीयप्रतियोगितावच्छेदकतायां येन सम्बन्धेनैकत्वस्यान्वयो विवक्षितस्तत्सम्बन्धावच्छिन्नत्वस्य निवेशे पुनस्तादृशसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकसजातीयनिष्ठभेदस्याप्रसिद्धत्वात्तद्वाक्यार्थाप्रसिद्धिरिति चेन्न, भेदीयप्रतियोगिता न केनापि सम्बन्धावच्छिन्नाऽपि तु तादृशभेदीयप्रतियोगितावच्छेदकत्वाभाव एव स्वाश्रयप्रकृत्यर्थतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, तथाच प्रकृते

तादृशाभावस्य च व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकतया सर्वत्र सत्वादप्रसिद्ध्यभावात् केचित्तु स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकतासामान्ये यत्सम्बन्धावच्छिन्नत्व यन्निष्ठत्वोभयाभावस्तत्सम्बन्धेन तद्वत्त्वं समुदितार्थः न काप्यनुपपत्तिरिति अन्येतु स्वाश्रयप्रकृत्यर्थतावच्छेदकत्वसम्बन्धातिरिक्तसम्बन्धावच्छिन्नत्वप्रकृत्यर्थतावच्छेदकवृत्त्येकत्वोभयाभाववतीयास्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकता तदभाववदेकत्वं सजातीयद्वितीयराहित्यमाहुः 'ननु' तथाप्यत्र एकत्वविवक्षायाः किंफलं यत्रव्रीह्युभयसम्पन्नदशायां सम्पन्नौ व्रीहियवौ इत्येव साधु न तु सपन्नोव्रीहिरित्यपिसाधुरिति वक्तुन्न शक्यते प्रकृत्यर्थतावच्छेदकव्रीहित्वस्य यवादौ असत्वेन यवसम्पत्तिदशायामपि सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्य स्वाश्रयव्रीहित्वसम्बन्धेन प्रकृत्यर्थे सत्वात् योगत्वस्याक्षतत्वादिति चेन्न, यत्र परम्परासम्बन्धेन प्रकृत्यर्थे एकत्वान्वयस्तत्र समभिव्याहृतपदार्थसंसर्गित्वरूपेणैव साजात्यं यत्र तुसाक्षात्सम्बन्धेनान्वयस्तत्र ग्रन्थकृदुक्तरूपेण तदिति तथा यवव्रीहिसम्पत्तिदशायां सम्पन्नोव्रीहिरित्यस्य समभिव्याहृतपदार्थः सम्पन्नस्तत्प्रतियोगिकतादात्म्यसंसर्गित्वविशिष्टयत्नवृत्तिभेदप्रतियोगितावच्छेदकत्वव्रीहिगतैकत्वे सत्वेन वाक्यार्थस्याप्रसिद्ध्याऽप्रामाण्यप्रसङ्गात् केवलव्रीहिसम्पत्तिदशायां तु साजात्यं व्रीह्यावेव तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्य व्रीहित्वगतैकत्वेसत्वेनान्वययोग्यत्वस्य तत्राक्षततया प्रामाण्यमुपपद्यते न चानुपयुक्तवस्तुसम्पत्तिदशायां तादृशप्रयोगस्य साधुत्वप्रसङ्गः अनुपयुक्ते साजात्यसत्वादिति वाच्यं सम्पन्नोव्रीहिरिति कदा प्रयोगस्तद्विविच्योच्यतां

यदा भोचैत्र तव क्षेत्रे किं किं सम्पन्नं इति मैत्रप्रश्नवाक्यं तदा संपन्नोव्रीहीरित्यस्य उत्तरवाक्यतया प्रयोगः तदा चैत्रीयस्वत्वविशिष्टव्रीह्यादावेव सम्पत्तिधीरिति ॥ प्रकृते स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टवक्तृतात्पर्य्यविषयवक्तृसम्बन्धविशेषरूपेणैव साजात्यं तथा चानुपयुक्तेस्तादृशसम्बन्धविरहेण तस्य सजातीयानन्तर्गतत्वाददोषात् यवसम्पत्तिदशायां च तादृशसम्बन्धविशेषस्य यवादौ सत्वेन साजात्यस्य यवेऽपि सत्त्वात् यवसम्पत्तिदशायान्न तादृशप्रयोग इति यवसम्पत्तिनिराशार्थमेकवचनप्रयोगः "नव्यास्त्वेकत्वस्य स्वाश्रयवत्त्व स्वाश्रयप्रकृत्यर्थतावच्छेदकवदितरावृत्तिसम्पत्त्यवच्छिन्नाभेदवत्त्वोभयसम्बन्धेनैकत्वस्य प्रकृते प्रकृत्यर्थेऽन्वयस्तथाच केवलव्रीहिसम्पत्तिदशायामेव तादृशप्रयोगा न यवसम्पत्तिदशायामपीत्याहुः यत्तु सम्पन्नोव्रीहिरित्यादावेकवचनोपस्थितानि नानैकत्वानीत्यादि,, एतद्देशे वहुघटसत्वदशायान्तादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीय इति "गादाधरो" अत्र ग्रन्थार्थस्तु स्पष्टएव तावद्योविशेषस्सोभिधीयते अर्थतस्तल्लाभादित्यस्य शाब्दवोधम्विनैव तद्वाधात् तथाच तद्वोधनाय न शब्दप्रयोगादर इति भावः०॥ अथ पशुनायजेदित्यत्र समभिव्याहृतपदार्थोयागकरणता तस्य यागेऽन्वयो न तु पशौ तत्संसर्गित्वविशिष्टत्वस्य प्रकृत्यर्थतावच्छेदकविरहेण योग्यत्वप्रसङ्गादिति न च तुल्यवित्तिवेद्यतया पशोरपि करणत्वभानाद्मायोग्यत्वमिति वाच्यम्, प्रत्यक्षे एव तथानियमो न तु शाब्देपीत्युक्तदोषतादवस्थ्यान्नच प्रकृतिशाब्दसमानाकारकप्रत्यक्षीयविशिष्टार्थप्रतियोगिकसंसर्गित्वविशिष्टस्य प्रकृत्यर्थतावच्छेदकसाजात्यघटके विवक्षणान्न दोष इति वाच्यं

यागांशे तत्ताभासकपदाभावात्सामान्यतो यागकरणत्वस्य यागान्तरकरणपशुसाधारणतयाऽयोग्यत्वस्य तादवस्थ्यादिति चेन्न न च स्वाश्रयपशुनिष्ठभेदप्रतियोगिपश्वकरणकत्वस्वाश्रयपशुकरणकत्वोभयसम्बन्धेन संख्यारूपैकत्वस्य यागेऽन्वयोपगमान्नानुपपत्तिरिति वाच्यं प्रकृत्यर्थानन्वयभंगप्रसङ्गादिति चेदथ स्वाश्रयपशुकरणकयागकरणपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य तादात्म्ये उभयसम्बन्धेन एकत्वविशिष्टत्वैकत्वमेकवचनेन बोध्यते तादृशैकत्वस्य प्रकृत्यर्थे पशावन्वयइति न पूर्व्वोक्तनियमभङ्गप्रसङ्गावकाश इति यद्वा यागपदस्य स्वभिन्नपशुकरणत्वसम्बन्धेन पशुविशिष्टान्ययागेन लक्षणा तत्र पशुकरणकत्वान्वयः करणतासम्बन्धेन वा पशोरन्वयः तृतीयान्तजजिपदस्य लक्षणावान्तात्पर्य्यग्राहकमिति विभावनीयम्। नव्यास्तुस्वानाश्रय पशुकरणकयागकरणपशुभिन्नत्वस्वाश्रयत्वोभयसम्बन्धेनैकत्वसंख्यायाः पशावन्वयोपगमान्न काप्यनुपपत्तिरित्याहुः। अन्येतु स्वसमभिव्याहृतपदार्थसंसर्गित्वमित्यत्र पदार्थस्य संसर्गित्वमिति षष्ठ्यर्थप्रतियोगिकत्वमात्रमविवक्षितञ्च प्रतियोगि, त्वानुयोगिकत्वान्यतरं, यद्वा विशेष्यवाचकपदोत्तरैकवचनसाजात्यघटके स्वसमभिव्याहृतपदार्थप्रतियोगिकसंसर्गित्ववैशिष्ट्यस्य प्रवेशः विशेषणवाचकविशेषणतावच्छेदककोटिप्रविष्टवाचकपदोत्तरैकवचनसाजात्यघटके स्वसमभिव्याहृतपदार्थानुयोगिकसंसर्गित्वविशिष्टस्यैव निवेशनीयत्वात्॥ यथा श्रुतस्यैव सम्यक्त्वात् प्रकृतशाब्दबोधसमानाकारकप्रत्यक्षेत्यादि पूर्व्वोक्तस्याविवक्षितत्वादित्याहुस्तच्चिन्त्यम्०। ननु साजात्यघटके पदार्थवैशिष्ट्यं परित्यज्य संसर्गित्ववैशिष्ट्यपर्य्यन्तानुशरणस्य निःप्रयोजकत्वमिति चेन्न एकघटसत्वदशाया-

मत्र घटोस्तीत्यस्याप्रामाण्यप्रसङ्गात्तथाहि स्वसमभिव्याहृतपदार्थस्य एतादृशनिरूपिताधेयत्वस्य कालिकादिसम्बन्धेन देशान्तरस्थित-घटसाधारणतया तद्विशिष्टघटत्वव वृत्तिभेदप्रतियोगितानवच्छेदकै-कत्वस्याप्रसिद्धत्वादतस्तदुपादानं, न च तदुपादानेपि कालिकादौ संसर्गत्वं चास्त्येव तदादायोक्तस्वदवस्थ एवेति वाच्यं संसर्गित्व-स्याकाङ्क्षाप्रयोज्यत्वार्थकत्वादिति वैशिष्ट्यघटकस्वाधिकरणस्या-काङ्क्षाप्रयोज्यत्वसम्बन्धेन निवेशात्कथं जातावेकत्वविवक्षया स-मर्थनमिति चेन्न घटपदस्य घटत्वविशिष्टे लक्षणामभ्युपेत्य समर्थनी-यत्वात् स्वाश्रयघटत्ववत्तासम्बन्धेन घटे एवैकत्वस्यान्वयतात्प-र्य्यात् अत्राप्यन्यत्सर्व्वं सम्पन्नोव्रीहिरित्रोक्तदिशा ग्राह्यम् ॥ न च बहुघटसत्वदशायां घटोस्तीत्यत्रैकत्वविवक्षया न किंचिदपि फलं सजातीयघटान्तराव्यवच्छेदकत्वादिति वाच्यं यदा एक-स्थानान्मैत्रः स्वकीयमन्यद्धनं गृहीत्वा स्थानान्तरङ्गतस्तदा भोचै-त्र तत्र तव किमस्ति इति मैत्रप्रश्नानन्तरमुक्तं घटोस्ति घटसत्वे तादृ-शप्रयोगः न तु घटपटोभयसत्वदशायामपि तादृशप्रयोगस्तथाच प-टसत्वनिराशार्थमेकवचनप्रयोगः ॥ तथाचात्र चैत्रस्वत्ववत् घट-विषयकधीर्म्मैत्रस्य भवत्येवेति एवञ्च न च पूर्व्ववदत्रापि स्वसमभि-व्याहृतपदार्थसंसर्गित्वविशिष्टघटत्वस्य पटादावसत्वेन पटस्य सा-जात्यानन्तर्गतत्वादिति वाच्यं ॥ अस्योत्तरयुक्तमधस्तादिति दि-क् । यद्यप्युक्तरूपेण साजात्यं यागान्तरकरणपशुसाधारणन्नत्त-द्यागकरणत्वञ्च’न समभिव्याहृतपदार्थस्तेन रूपेण पदानुपस्थितेः ॥ तथापि स्वाश्रयनिष्ठभेदप्रतियोगि पशुकरणकत्वस्वाश्रयपशुकरण-कत्वोभयसम्बन्धेनैकत्वस्य यागेऽन्वयोपगमान्नानुपपत्तिरिति ध्ये-

यम् । इत्यादि गादाधरी "अथात्र" संख्यायाः प्रकृत्यर्थेऽन्वयस्य सर्व्वानुभवसिद्धस्य विलयप्रसङ्ग इति चेन्न ॥ अत्र मैथिलाः एकवचनस्यैकत्वत्वावच्छिन्नार्थकत्वमेव परन्तु प्रकृते एकत्वस्य स्वाश्रयत्वस्वनाश्रयपशुकरणयागकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वोभयसम्बन्धेन एकत्वान्वितपशुकरणत्वान्वयबोधसाकाङ्क्षत्वमेकवचनान्तस्याभ्युपगमादनुपपत्तिविरहात् । एवं सम्पन्नो व्रीहिरित्यादौ स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वस्वाश्रयाश्रयभिन्नो यः प्रयोक्तृस्वत्वत्वान्तद्वृत्तिसम्पन्नत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वोभयसम्बन्धेन एकत्वप्रकारकव्रीहिविशेष्यकान्वयबोधे एकवचनसाकाङ्क्षत्वाभ्युपगमात् ॥ यवव्रीह्युभयसम्पत्तिस्थले सम्पन्नौ व्रीहियवौ इत्येव प्रयोगो न तु सम्पन्नो व्रीहिरिति ॥ एवं बहुतरघटसत्वदशायां घटोस्तीत्यादावपि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वस्वाश्रयाश्रयभिन्नवृत्तिसमभिव्याहृतपदार्थसंसर्गित्वविशिष्ट तात्पर्य्यविषयप्रयोक्तृस्वत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वोभयसम्बन्धेन एकत्वप्रकारकघटविशेष्यकान्वयबोधे एकवचनस्य साकाङ्क्षत्वाभ्युपगमान्न प्रयोक्तृस्वत्वत्वपटादिस्वत्वस्थले पटोस्तीति वाक्यं प्रमाणमित्याहुः ॥ (अथ नीलस्य घट) इत्यादावनुपस्थित्यादिकारणसमवधानसम्भवादित्यारभ्यकार्य्यतावच्छेदककोटौ कारणाव्यवहितोत्तरत्वनिवेशान्नोक्ताकाङ्क्षाज्ञानयोः परस्परबोधे व्यभिचार इति "गादाधरो" । ननु कार्य्यतावच्छेदककोटौ विषयानिवेशपक्षे निरुक्ताकाङ्क्षाजन्यशाब्दः किञ्चिद्धर्म्मावच्छिन्नविशेष्यककिञ्चिद्धर्म्मावच्छिन्नविधेयक स्तत्र नियामकाभावादिति चे-

न्न योग्यताज्ञानस्यैकविषयस्य सहकारिणः कार्य्यतावच्छेदककोटौ विषयविशेषस्य निवेशात् सहकारिफलनिश्चयादेव आकाङ्क्षायाः फलनिश्चयसम्भवादिति "मैथिलाः" ॥ (अथ अभेदो यदि) भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिः इति "गादाधरी" अथ घटत्वावच्छिन्नप्रतियोगिताकत्वभेदत्वोभयधर्म्मावच्छिन्नप्रतियोगिताकाभावस्य तादृशस्य पटादौ प्रसिद्धतया कथमप्रसिद्धिरित्युक्तमिति० । न च यदि भेदत्वमात्रावच्छिन्नप्रतियोगिताकाभावोऽभेदस्तदाऽप्रसिद्धिरित्यर्थ इति वाच्यम्० । भेदत्वेन घटाभावस्य तादृशस्य प्रसिद्धत्वात् कथमप्रसिद्धमिति,, न च भेदत्वमात्रावच्छिन्नभेदप्रतियोगिताकाभावस्य तथात्वेऽप्रसिद्धिरिति वाच्यम् । भेदत्वेन भेदघटोभयाभावस्य तादृशस्य प्रसिद्धत्वात् ०। न च भेदत्वमात्रावच्छिन्नभेदमात्रवृत्तिप्रतियोगिताकाभावस्य तथात्वेऽप्रसिद्धिरिति वाच्यम् भेदत्वेन तावद्भेदाभावस्य तादृशस्य प्रसिद्धत्वान्न च भेदत्वमात्रावच्छिन्नभेदत्वव्यापकप्रतियोगिताकाभावस्य तथात्वेऽप्रसिद्धिरिति वाच्यम् । पूर्वोक्तोभयाभावस्य तादृशस्य प्रसिद्धत्वात्० । न च भेदत्वेन भेदत्वसमनोयतप्रतियोगिताकाभावस्य तथात्वेऽप्रसिद्धिरिति वाच्यं,, भेदत्वेन तद्भेदतद्भेदभिन्नभेदोभयाभावस्य भेदत्वेन यावद्भेदाभावस्य वा तादृशस्य प्रसिद्धत्वादिति चेन्न । भेदत्वगतैकत्ववृत्तिप्रतियोगिताकाभावस्य तथात्वेऽप्रसिद्धिरिति परमार्थः "वृत्तित्वञ्च,, स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्व, स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन स्वं प्रतियोगिता "तथा च"

निरुक्तोभयसम्बन्धेन भेदत्वगतैकत्ववृत्तिप्रतियोगित्वप्रसिद्ध्या तन्निरूपकाभावस्य सुतरामप्रसिद्धत्वात्० । ननु संयोगसम्बन्धावच्छिन्नभेदत्वावच्छिन्नप्रतियोगितायास्तादृशतया तन्निरूपकाभावस्य प्रसिद्धत्वादिति चेन्न निरुक्तोभयसम्बन्धेन भेदत्वगतैकत्ववृत्तिस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तदर्थत्वेऽप्रसिद्धिरित्यस्य पर्य्यवसितार्थत्वात् न च स्वरूपसवायाद्युभयसम्बन्धावच्छिन्नप्रतियोगिताकभेदसामान्याभावस्य प्रसिद्धत्वादिति वाच्यं, स्वरूपत्वेतरधर्म्मानवच्छिन्नसंसर्गताकभेदत्वावच्छिन्नप्रतियोगिताकाभावस्य तदर्थतयाऽप्रसिद्धिसम्भवात्० । (अथ अभेदो यदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिरित्यस्य कोऽर्थः) प्रसिद्धत्वाभाववान् भेदत्वावच्छिन्नाभावस्य च न संभति० निरुक्तरीत्या भेदत्वावच्छिन्नाभावस्यालीकतयाऽधिकरणाप्रसिद्धिरिति चेन्न स्वरूपसंसर्गमात्रावच्छिन्नप्रतियोगिताया-न्निरुक्तोभयसम्बन्धेन भेदत्वगतैकत्ववृत्तित्वाभावस्य निष्कृष्टार्थत्वान्नासंगतिः० । संयोगसंसर्गावच्छिन्नप्रतियोगितायां भेदत्वगतैकत्ववृत्तित्वस्य प्रसिद्धतया तदभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगितायां सत्वान्न काप्यनुपपत्तिरिति दिक् ॥*॥ न च निरुक्तोभयसम्बन्धेन भेदत्वगतैकत्वप्रसिद्धिरिति वाच्यं,, भेदत्वगतैकत्वाभावस्य निरुक्तोभयसम्बन्धावच्छिन्नस्वनिरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य व्यधिकरणसम्बन्धावच्छिन्नाभावस्य तदर्थस्य प्रसिद्धत्वात् यदि च निरुक्तसम्बन्धस्य वृत्त्यनियामकतया तत्संबन्धावच्छिन्नत्वस्य प्रतियोगितायामसत्वान्न दोष इत्युच्यते तदा निरुक्तोभयसंबन्धावच्छिन्नभेदत्व-

गतैकत्ववृत्तित्वप्रकारतानिरूपितविशेष्यत्वाभावस्य प्रमेयविशेष्यताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य प्रसिद्धत्वात्० प्रमेयविशेष्यतायास्तथाभिधतया तदभावस्य केवलान्वयित्वात्० महीरुहङ्गच्छति नाभावमिति प्रयोगानुरोधेन वृत्तिनियामकसंबन्धाभावप्रतियोगितावच्छेदकत्वस्यावश्यमभ्युपगमादित्यग्रे स्वयमेव स्पष्टमभिधानाच्चेति० । एवं नीलपटपरनीलशब्दघटितनीलो घट इति वाक्यस्यापि प्रामाण्यापत्तिः० नीलत्वादिना नीलपटादिभेदाभावस्य नीलघटे सत्वादिति गादाधरी० ननु नीलस्य नीलावच्छिन्नपरतया नीलभेदाभावस्य च नीलगुणस्वरूपतया तस्य नानात्वात् परिनिष्ठनीलस्य नीलघटादौ बाधान्न प्रामाण्यापत्तिरिति चेन्न एकधर्म्मावच्छिन्ननिरूपकत्वस्यैक्यमते नीलत्वावच्छिन्नपटगतनीलनिष्ठनिरूपकत्वस्य घटगतनीलनिष्ठनिरूपकत्वस्य चैक्यतया निरुक्तवाक्यजन्यबोधे तन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वरूपस्य प्रामाण्यसत्वेन तज्जनकवाक्ये प्रामाण्यस्य निराकरणायोगात् वस्तुतस्तु पटपरद्रव्यशब्दघटितद्रव्यं घट इति वाक्यस्य प्रामाण्यापत्तिः । द्रव्यत्वात्मकस्य द्रव्यभेदाभावस्य घटे सत्वेन तज्जन्यबोधस्य प्रमात्मकबोधजनकस्वरूपस्य वाक्यनिष्ठप्रामाण्यस्याक्षतत्वादिति० ॥ S. S. J.

अभेदस्तादात्म्यन्तच्च स्ववृत्त्यसाधारणोधर्म्मः । "असाधारणत्वञ्च" एकमात्रवृत्तित्वं "एकमात्रवृत्तित्वञ्च" स्वप्रतियोगिवृत्तित्व, स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टयँत्तदन्यत्वमिति गादाधरी० । अत्र भेदत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । तादात्म्यं चेति रीत्या आत्माश्रयेत्या-

दि दोषप्रसङ्ग इति० न च निरुक्तोभयसंबन्धेनाभावविशिष्टान्यत्वमेव तदिति वाच्यम् "अभावत्वञ्च" द्रव्यादिघटकान्योन्याभावत्वं "तत्रापि" अन्योन्याभावत्वं किमित्यादिरीत्या तद्दोषाक्रान्तत्वादेवमभावपदेन तद्व्यक्तिर्नास्तीति प्रतीतिसाक्षिकाभावस्यापि धर्त्तुं शक्यतया तत्सामानाधिकरण्यस्य तत्प्रतियोगिवृत्तित्वस्य च तद्व्यक्तित्वे सत्वात्स्वस्मिन् स्वात्यन्ताभावसत्वाद्विशिष्टान्यस्याप्रसिद्धत्वात्० । न चात्यन्ताभावविशिष्टान्यत्वस्य विवक्षितत्वाद्वैशिष्ट्यं च स्वसमानाधिकरणवृत्तित्व, स्वप्रतियोगिवृत्तित्वोभयसंबन्धेनेति नात्माश्रयासिद्ध्योरवकाश इति वाच्यम्" अत्यन्ताभावत्वं तदा तत्संसर्गाभावत्वं संसर्गारोपजन्यप्रतीतिविषयाभावत्वं अत्र भेदव्युदासाय संसर्गस्तादात्म्यभिन्नो ग्राह्यः । "तथाच" तादात्म्यं स्ववृत्त्यसाधारणो धर्म्म इत्यादिना आत्माश्रयतादवस्थ्यादिति चेन्न,, भेदत्वन्तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वं ( अनुयोगिताविशेषो वेत्यन्यदेतत् ॥) उक्तदोषभियैव जगदीशेन सिद्धान्तलक्षणे,, अनुयोगिताविशेषो वेत्युक्तं " तथा च" भेदत्वमनुयोगिताविशेष इति उक्तदोषावकाशाभावादिति ध्येयम्० अथ तद्व्यक्तिरेतद्व्यक्तिरेतदुभयभेदस्य वैशिष्ट्यं तद्व्यक्तित्वे सत्वादुभयभेदस्य केवलान्वयित्वाद्विशिष्टान्यधर्म्माप्रसिद्धिरिति० न च स्वसामानाधिकरण्यस्वप्रतियोगिताव्याप्यत्वोभयसंबन्धेन वैशिष्ट्यस्य विवक्षितत्वात्० "तद्व्यक्तित्वे उभयनिष्ठप्रतियोगिताव्यापकत्वविरहेण विशिष्टान्यत्वस्य सत्वान्न दोष इति वाच्यम्० द्रव्यत्वादेरपि निरुक्तसाधारणधर्म्मपदेनेदानीं धर्त्तुं शक्यतया पटपरद्रव्यशब्द शब्दघटितद्र-

न्यं घट इति वाक्यस्याप्रामाण्यापत्तेस्तथाहि घटादिभेदस्य घटत्वाभावस्य चैकतया घटादिभेदप्रतियोगित्वस्य घटत्वादावपि सत्वेन तत्र द्रव्यत्वस्यासत्वेन प्रतियोगिताव्यापकत्वसम्बन्धविरहेण घटादिभेदविशिष्टान्यत्वस्य च द्रव्यत्वे सत्वादिति० न च स्वप्रतियोगिताव्यापकत्वेत्यनेन स्वनिरूपितभेदत्वनिरूपकप्रतियोगिताव्यापकत्वस्य विवक्षितत्वात् घटत्वनिष्ठप्रतियोगिताया मत्यन्ताभावत्वनिरूपितत्वसत्वेन भेदत्वनिरूपकत्वविरहान्न व्यापकत्वस्य-द्रव्यत्वविशिष्टहानिरिति वाच्यम्" अभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणकस्वरूपतानायि घटभेदस्य घटभेदविष्टपदभेदाभेदस्य चैक्यात्० घटादिभेदनिरूपितप्रतियोगित्वस्य पटभेदे सत्वेन व्यापकत्वस्य द्रव्यत्वे विरहेणोक्तातिप्रसङ्गतादवस्थ्यात्० पटभेदप्रतियोगितायां च भेदत्वनिरूपकत्वं स्यादिति चेन्न यत्किञ्चित्प्रतियोगितानिरूपितभेदवृत्त्यनुयोगिताविशिष्टान्यत्वस्य विवक्षितत्वाद्वैशिष्ट्यं च स्वाश्रयसामानाधिकरण्य, स्वनिरूपितप्रतियोगिताव्यापकत्वोभयसंबन्धेन तथा च घटत्वादिभेदत्वाख्यानुयोगितानिरूपितत्वस्य पटादिभेदभेदीयप्रतियोगितायां विरहेणातिप्रसङ्गविरहात् न च तद्व्यक्तित्वेपि तादृशविशिष्टान्यत्वासम्भवस्तथाहि० नीलघटनिष्ठतद्व्यक्तित्वे नीलघटभेदनिष्ठोयःपटभेदभेदस्तस्यापि तदात्मकत्वेन नीलघटभेदत्वाश्रयतया तदधिकरणतापटभेदभेदत्वे सत्वेन स्वाश्रयसामानाधिकरण्यस्यापि सत्वादिति वाच्यम्० स्वावच्छिन्नाधिकरणवृत्तित्वस्य प्रथमसंबन्धेन विवक्षितत्वान्न दोषः । अथ स्वावच्छिन्नभेदस्य स्वस्वरूपतया घटभेदत्वाख्यानुयोगितानिरूपितत्वस्य घटनिष्ठप्रतियोगित्ववत्० ।

घटभेदभिन्ननिष्ठप्रतियोगितायां घटभेदभेदाभावस्य घटभेदत्वस्वरूपतया तदीयप्रतियोगितायां च सत्त्वेन द्रव्यत्वे व्यापकत्वविरहेणातिप्रसङ्गतादवस्थ्यादिति(१) चेन्न स्वनिरूपितत्व, स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसंबन्धेन स्वविशिष्टप्रतियोगिताव्यापकत्वस्य द्वितीयसंबन्धेन विवक्षितत्वान्न कोपि दोषः०। किञ्च स्वसामानाधिकरण्य, स्वीययत्किञ्चित्प्रतियोगिताव्यापकत्वोभयसंबन्धेन भेदविशिष्टान्यत्वस्य यथाश्रुतस्यैव सम्यक्त्वात्प्रतियोगिभेदेन प्रतियोगितायाः भेदे मानाभावस्तथाचोभयभेदमादायासम्भवान्यप्रतियोगितातिप्रसङ्गयोरनवकाशादिति भावनीयम्०। "केचित्तु" प्रतियोगिवृत्तिभेदविशिष्टान्यत्वस्य विवक्षितत्वादुभयभेदमादायासम्भवाभावादिति०। न च प्रतियोगित्वस्य केवलान्वयितया वृत्तिमति प्रतियोगिवृत्तित्वस्य सम्भव इति वाच्यम्। स्वप्रतियोग्यवृत्तित्वस्यैव निवेशनीयत्वान्न च स्वस्वस्याननुगतत्वाननुगतत्वशङ्काकवलितत्वादिति वाच्यम्०। स्वस्वप्रतियोगिवृत्तयो ये ये भेदास्तत्तद्भेदकूटवद्भेदविशिष्टान्यत्वस्याविवक्षितत्वान्नच सर्वज्ञस्य तादृशभेदकूटज्ञानाभावात्तादृशनिवेशासम्भव इति वाच्यम्०। स्वनिरूपकत्व,,स्वसामानाधिकरण्योभयसंबन्धेन प्रतियोगिताविशिष्टान्यत्वस्य विवक्षितत्वान्न दोष इति यत्तु व्यासज्य-

---

(१) यैव घटभेदत्वाख्यानुयोगिता स एव घटभेदत्वाख्यानुयोगितावद्भिन्नभेदः। एवं घटभेदाभावः। एवं च तदीयप्रतियोगितायां घटभेदत्वाख्यानुयोगितानिरूपितत्वसत्वात्०। इतिभावः॥

वृत्तिधर्म्मावच्छिन्नप्रतियोगिताकभेदविशिष्टान्यत्वमेव ग्रन्थकृतोभिप्रेतमिति तन्न तद्व्यक्तित्वेन तद्व्यक्तिगगनोभयभेदादिकमादाय सम्भववाणस्यासम्भवादिति । वस्तुतस्तु एकत्ववृत्तिप्रतियोगिताकभेदविशिष्टान्यत्वमेव तत् "प्रतियोगितायामेकत्ववृत्तित्वं च" स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्व, स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धेन स्वं प्रतियोगिता तथाचोभयभेदादिप्रतियोगितायामेकत्ववृत्तित्वविरहेण तेषां धर्तुमशक्यत्वात्० । तद्व्यक्तिभेदीयप्रतियोगितायां चैकत्ववृत्तित्वसत्वेन तेषां धर्त्तुं शक्यतया तद्विशिष्टत्वस्य द्रव्यत्वादौ तद्विशिष्टान्यत्वस्य च तद्व्यक्तित्वादौ सत्वेनेति प्रसङ्गाप्रसङ्गयोरभावादिति । अथ नीलनिष्ठतद्व्यक्तित्वे पटभेदसामानाधिकरण्यस्य तादात्म्येन स्ववद्भिन्नभेदानतिरिक्ततया स्वनिरूपितस्ववद्भिन्ननिष्ठप्रतियोगिताश्रयवृत्तित्वस्य सत्वेन निरुक्तोभयसंबन्धेन भेदविशिष्टत्वस्य सत्वेन भेदविशिष्टान्यत्वस्याप्रसिद्ध्या नीलो घट इति वाक्यस्याप्रामाण्यं स्यादिति चेन्न किञ्चित्प्रतियोगितानिरूपकभेदवृत्त्यनुयोगिताविशिष्टान्यत्वस्य विवक्षितत्वात्०। "वैशिष्ट्यं च" स्वाश्रयसामानाधिकरण्य, स्वनिरूपितप्रतियोगिताश्रयवृत्तित्वोभयसम्बन्धेन,० स्वमत्वानुयोगिता न च स्ववद्भिन्नभेदत्वाख्यानुयोगिता विशिष्टत्वस्यैव तद्व्यक्तित्वे सत्वात्तथाहि । स्वाश्रयीभूतपटभेदसामानाधिकरण्यस्य स्वनिरूपिततादात्म्येन यः पटभेदवान्तद्भिन्ननिष्ठप्रतियोगिताश्रयवृत्तित्वस्य एव सत्वादसम्भवस्तादवस्थ्य एवेति वाच्यं स्वावच्छिन्नाधिकरणवृत्तित्वस्य प्रथमसंबन्धेन

विवक्षितत्वात्तथाच पटभेदव्यक्तिमद्भिन्नभेदत्वावच्छिन्नाधिकरणत्वस्य नीलघटे बाधान्नाप्रसिद्धिरिति० न च घटभेदनिष्ठतद्व्यक्तित्वे घटभेदत्वावच्छिन्नाधिकरणघटभेदभेदवृत्तित्वस्य घटभेदत्वनिरूपितायां घटभेदभेदाभावीयप्रतियोगितासामानाधिकरण्यस्य सत्वेन भेदविशिष्टान्यत्वविरहात्० । घटभेदभेदः प्रमेयः एवन्तादृशभेदो ऽभाव इत्यादेः प्रामाण्यापत्तेरिति वाच्यम् । अनिरूपितत्व,,स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टप्रतियोगितासामानाधिकरण्यस्य द्वितीयसंबन्धेन विवक्षितत्वात्तथा च, घटभेदत्ववृत्तिघटभेदभेदाभावत्वनिरूपितस्यैव तादृशप्रतियोगितायां सत्वेनानिरूपितत्वविरहान्नोभयसंबन्धेन घटभेदत्वविशिष्टत्वं निरुक्तप्रतियोगितायामपितु घटनिष्ठप्रतियोगितायामेवेति तत्सामानाधिकरण्यस्य घटभेदभेदनिष्ठतद्व्यक्तित्वे विरहेणाप्रसिद्धिविरहादिति० । न च घटभेदभेदत्वघटनिष्ठप्रतियोगित्वान्यतरवतः स्वरूपसंबन्धेनाभावस्य लाघवेन घटभेदत्वस्वरूपतया घटभेदत्ववृत्तितादृशान्यतरावच्छिन्नप्रतियोगिताकाभावत्वाख्यानुयोगितानिरूपितत्वस्यान्यतरावच्छिन्नप्रतियोगितायां सत्वेनानिरूपितत्वविरहेणोभयसंबन्धेनानुयोगिताविशिष्टत्वस्याप्रसिद्ध्या संबन्धघटकस्य विशिष्टप्रतियोगित्वाप्रसिद्ध्या ऽसम्भवप्रसङ्गादिति वाच्यम्० । स्ववृत्त्यनुयोगितात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतासाक्षादवच्छेदकत्वस्य वृत्त्यनुयोगितानिरूपकतानिरूपितनिरूप्यत्वावच्छेदकत्वोभयसंबन्धे स्वविशिष्टं यत्किञ्चिद्धर्म्मावच्छिन्नप्रतियोगितात्वं तदवच्छेदकतात्वावच्छिन्नसामानाधिकरण्यस्य द्वितीयसंबन्धेन विवक्षितत्वात् "त-

थाच" प्रकृते तादृशनिरूप्यतावच्छेदकत्वं अन्यतरावच्छिन्नप्रतियोगितात्वे एवास्ति न तु घटत्वावच्छिन्नप्रतियोगितात्वे, इति । तादृशनिरूपकतावच्छेदकत्वस्य तत्र सत्वान्नाप्रसिद्ध्यवकाश इति (अन्यत्सर्वं स्वयमूह्यं०) अथ स्वाश्रयाधेयतासंबन्धेन स्वस्मिन्ननुयोगिताकाङ्क्षाविरहेण भेदविशिष्टान्यवान् प्रमेय इत्यस्याप्रामाण्यं स्यात्प्रत्ययार्थे भेदविशिष्टान्यधर्म्मे प्रकृत्यर्थस्य भेदविशिष्टान्यधर्म्मवतोरनन्वयादिति० । न च तत्र वतुप्रत्ययेन संबन्ध्युल्लेखात्० । भेदविशिष्टान्यधर्म्मसंबन्धिवृत्तिभेदविशिष्टान्यधर्म्मवान् प्रमेय इत्याकारकस्तत्राधिकावगाहिशाब्दबोधस्सम्भवादिति वाच्यम्० । भेदविशिष्टान्यः प्रमेय इत्यादावगत्यापत्तेरिति चेन्न यथा भेदविशिष्टान्यत्वे विशेषणविभक्तेः शक्तिस्तथा स्ववृत्तित्व, स्वभिन्नवृत्तित्वोभयसंबन्धेन वस्तुविशिष्टान्येपि शक्तिः स्वीक्रियते यथा च, प्रकृते भेदविशिष्टान्यवृत्तिवस्तुविशिष्टान्यधर्म्मवान् प्रमेय इत्याकारकः शाब्दबोधः सम्भवादिति न काप्यनुपपत्तिरिति अथ सर्व्वपरिष्कारेप्ययं पूर्वपक्षः । "तथाहि" प्रथमे तद्व्यक्तित्वे तद्व्यक्त्यात्मकप्रतियोगिवृत्तित्वस्य तद्व्यक्तिभेदाधिकरणपटादिनिरूपितकालिकादिसंवन्धावच्छिन्नवृत्तित्वस्य च सत्वेन भेदविशिष्टान्यत्वविरहादेवं रीत्या वस्तुविशिष्टान्यत्वस्य च विरहादसम्भवप्रसङ्गान्न च स्वरूपसंबन्धेनोभयवृत्तित्वस्य विवक्षितत्वान्न दोष इति "वाच्यम्" स्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य द्रव्यत्वे विरहेण भेदविशिष्टान्यत्वस्य सत्वात्पटपरद्रव्यपदघटितद्रव्यंघट इति वाक्यस्य प्रामाण्यापत्तिरिति चेन्न,, स्वरूपसंबन्धेनैव विभक्त्यर्थस्य पदार्थान्तरान्वयसाकाङ्क्षत्वस्वीकारादापत्तिविर-

हान्नच तथापि स्वाधिकरणनिरूपितप्रमेयत्वावच्छिन्नवृत्तित्वस्य प्रमेये सत्वेन तद्व्यक्तित्वे सत्वाद्भेदविशिष्टान्यधर्म्माप्रसिद्धिरिति वाच्यं, वृत्तितायां केवलान्वयिधर्म्मानवच्छिन्नत्वस्य विवक्षितत्वान्न दोषः० । न च केवलान्वयित्वं वृत्तिमदत्यन्ताभावाप्रतियोगित्वं "अत्यन्ताभावत्वं च" सदातनसंसर्गाभावत्वम्० । संसर्गाभावत्त्वञ्च संसर्गारोपजन्यप्रतीतिविषयाभावत्वं० संसर्गस्तादात्म्यभिन्नो ग्राह्य स्तादात्म्यञ्च, स्ववृत्त्यभावसाधारणोधर्म्म इत्याद्युक्तरीत्यान्योन्याश्रयप्रसङ्ग इति वाच्यम्० । स्वाधिकरणनिरूपितवृत्तितायामुभयवृत्तिधर्म्मावच्छिन्नत्वस्य निवेशादेव प्रमेयत्वावच्छिन्नवृत्तितामादायोक्तदोषवारणसम्भवादिति० वस्तुतस्तु स्वप्रतियोगिविशिष्टवृत्तितावत्व"स्वाधिकरणविशिष्टवृत्तितावत्वोभयसंबन्धेन भेदविशिष्टत्वस्य विवक्षितत्वाद्वैशिष्टयञ्चोभयत्व स्वनिरूपितत्व, स्वभिन्नानिरूपितत्वोभयसंबन्धेन प्रथमस्वपदम्प्रतियोगितापरं द्वितीयञ्च स्वपदमधिकरणपरं "तथाच" प्रमेयत्वावच्छिन्नवृत्तितायां वस्तुद्वयनिरूपितत्वसत्वेन निरुक्तोभयसंबन्धेन प्रतियोगिताविशिष्टत्वस्याधिकरणविशिष्टत्वस्य चाभावान्नतदादायासंभवावकाश इति ॥*॥ अथ वस्तुतःस्थित्यादिकल्पे कपि संयोगवन्निष्ठतत्तद्व्यक्त्यवच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तितया तत्प्रतियोगिवृत्तित्वस्य मूलावच्छेदेन तत्सामानाधिकरण्यस्य च सत्वात्तन्निष्ठतद्व्यक्तित्वे भेदविशिष्टान्यत्वस्य विरहेण कपिसँय्योगो वृक्ष इति वाक्यस्याप्रामाण्यं स्यादिति । चेन्न,, तद्व्यक्तेः स्वरूपतो भानानभ्युपगमान्निरुक्तोभयसंबन्धेनैकत्ववृत्तित्वस्य तद्व्यक्त्यवच्छेदेन प्रतियोगितायां विरहेण निरुक्तभेद-

स्य धर्त्तुमशक्यत्वात्तद्व्यक्तित्वस्य च व्याप्यवृत्तितया तदवच्छिन्नप्रतियोगिताकभेदस्य व्याप्यवृत्तित्वान्न दोषः । किञ्च स्वाधिकरणत्वस्य निरवच्छिन्नस्वरूपेण विवक्षितत्वान्न कोपि दोषः । पद्मादधातीत्यलव्विँस्तरेणेति० ॥*॥ स्तोकं स्थीयते इत्यादौ भावाख्यान्तस्य वर्त्तमानार्थकत्वान्नच वर्त्तमानत्वाविवक्षायां द्वितीयानुपपत्तिरिति "वाच्यम्" वर्त्तमानत्वविवक्षास्थानेऽन्वयबोधप्रयोजकाकाङ्क्षाशालित्वेन, तदविवक्षास्थलेपि भावाख्यातस्यार्थकत्वादित्युक्तं गदाधरेण अथात्रत्वन्ययुक्त्याऽधिकरणार्थकघञ्स्थलीयान्वयबोधप्रयोजकाकाङ्क्षाशालित्वेन भावस्थलीयघञ्प्रत्ययस्य सार्थकत्वात्कथं स्तोकःपाक इति चेन्न,, धातुभिन्नार्थे प्रत्ययविधायकशास्त्रप्रयोज्यप्रत्ययान्तधातूपस्थाप्य क्रियाविशेषणानां कर्म्मत्वमित्यस्य विवक्षितत्वादधिकरणार्थकप्रत्ययविधायकशास्त्रप्रयोज्यत्वस्य भावार्थकप्रत्यये विरहाद्वर्त्तमाने लडिति शास्त्रेण स्थीयते इति प्रत्ययस्य सम्पत्तितया वर्त्तमानत्वविवक्षाऽविवक्षा एतदुभयत्र तादृशशास्त्रप्रयोज्यत्वस्य सत्वान्न कोपि दोषः । ननु तदुत्तरमनुमितौ मानसज्ञाने वा इत्यत्रोत्तरमिति द्वितीया न स्यात्० ॥ अनुपूर्वकमाधातोःक्तिन्प्रत्ययस्य भावार्थकत्वादिति० । ज्ञाधातूत्तरल्युट्प्रत्ययस्य भावार्थकत्वाच्चेति चेन्न,, भावविहितक्तिन्प्रत्ययस्य स्त्रीत्वार्थकत्वेन सार्थकत्वात्० । ज्ञाधातूत्तरल्युट्प्रत्ययस्य करणाधिकरणयोश्चेत्यनेन सार्थकत्वादिति दिक्० ॥ तदर्थबोधकपदोत्तरविभक्त्या संख्यान्वयबोधने अभेदसम्बन्धावच्छिन्नप्रकारताभिन्नतदर्थविषयताशालिशाब्दबोधसामग्र्यपेक्षितेत्युक्तम्भट्टाचार्य्येण ननु वेदाःप्रमाणमित्यत्र प्रमाणे कथमेकत्वमं-

ख्यान्वयबोधः प्रमाणपदार्थनिष्ठविषयतायामभेदसम्बन्धावच्छिन्न-प्रकारताभिन्नत्वविरहादिति चेन्न,, तदर्थकपदोत्तरविभक्त्या साक्षात्संबन्धेन संख्यान्वयबोधने इत्युक्तावन्वयबोधसम्भवात्० स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वात्मकपरम्परासंबन्धेनैकत्वस्य प्रमाणेन्वयो न तु साक्षात्समवायादिसंबन्धेन यद्वाऽभेदसंबन्धावच्छिन्नतदर्थनिष्ठप्रमाणत्वावच्छिन्नप्रकारताभिन्नस्य प्रमाणत्वनिष्ठविषयतायां सत्वेन तच्छालिशाब्दसामग्र्यास्तत्र सत्वात्०। तदर्थत्वस्य तदर्थतदर्थतावच्छेदकसाधारणत्वादित्यादिकमूहनीयमिति दिक्० ॥ अथात्र नीलो घट इत्यादौ नीलपदोत्तरविभक्त्या संख्यान्वयबोधने नीलपदार्थभिन्नघटनिष्ठविशेष्यतायान्नीलपदार्थनिष्ठत्वस्य तत्प्रकारताभिन्नत्वस्य च सत्वेन तन्निरूपकबोधसामग्र्याः प्रयोजिकायाः सत्वेन कथं नीलपदार्थे नैकत्वस्यान्वय इति चेन्न,, तदर्थनिष्ठेत्यस्य तदर्थतावच्छेदकधर्म्मावच्छिन्नेत्यर्थः ॥ तथा च घटविशेष्यताया घटत्वावच्छिन्नत्वमेवास्ति नत्वन्यधर्म्मावच्छिन्नत्वमिति तादृशप्रयोजकत्वविरहान्नापत्तिरिति० न च नीलो घटः घटो द्रव्यमिति वाक्यद्वयजन्यबोधे द्रव्यविशेषणतापन्ने घटे कथं नैकत्वान्वयः तादृशसामग्र्याः सत्वादिति वाच्यं तत्पदोत्तरविभक्त्या तत्पदार्थतावच्छेदकधर्म्मावच्छिन्नविशेष्यकसंख्यान्वयबोधने तत्पदप्रयोज्या या तदर्थतावच्छेदकीभूततद्धर्म्मावच्छिन्नाभेदसंबन्धावच्छिन्ना प्रकारताभिन्नविशेष्यता तन्निरूपकसामाग्र्या अपेक्षितत्वात् ॥ नीलविशेष्यतापन्ने घटे एव एकत्वान्वयो न तु विशेषणतापन्ने घटेपीति ध्येयम्० ॥ प्रमाणत्वे एकत्वान्वयोपगमे तु तदर्थबोधकपदोत्तरविभक्त्या स्तदर्थनिष्ठ-

विशेष्यतानिरूपितसंख्यानिष्ठप्रकारताशालिबुद्धिं प्रति तादृशसामग्र्या अपेक्षितत्वं नह्यत्र पदार्थान्वयः किन्तु तदर्थतावच्छेदके एव तथा च कार्य्यतावच्छेदकानाक्रान्तत्वादिति ॥ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटोभवति सम्पूर्णेपि तडागे काकः कुम्भोदकं पिवति। जीवनग्रहणे नम्राः ॥*॥ अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः ॥ घटो घट इत्यादि अथ नीलघटो घटः दण्डवान्रक्तदण्डवान् इत्यादौ तादृशबोधस्य प्रसिद्धिः विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनै रुपगमादिति चेत्तर्हि घटाद्यंशे विशेष्यतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्य्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नान्वयबोधप्रयोजिका तदभावादेव न घटो घट इत्यादौ तादृशापत्तिरित्यन्तं गदाधरेणोक्तं ॥ अथ घटत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारताकान्वयबुद्धित्वात्मके सामान्यधर्म्मावच्छिन्नस्यापत्तेर्दुर्व्वारत्वान्नीलाद्युपस्थितेः पीतघटो घट इत्यत्रासत्त्वेनाप्रयोजकत्वादिति चेन्न ॥ नीलपीताद्युपस्थितिं विना तथाविधसामान्यधर्म्मावच्छिन्नस्यानुदयेन तथाविधबाधे घटत्वान्यधर्म्मप्रकारकोपस्थितिघटितसामग्र्याः प्रयोजकत्वोपगमात्" "न च" एकत्वाद्युपस्थिते सत्वात्तदापत्तेर्व्वज्रलेपत्वादिति वाच्यं, प्रातिपदिकपदजन्यत्वोपस्थितिविशेषणत्वादेकत्वाद्युपस्थितेर्ग्रहणासम्भवात् "यदि च" घटो घटः प्रमेयः पट इत्यादौ प्रमेयाद्युपस्थितेस्तथाविधस्य सत्वादुक्तदोषस्तदवस्थ इत्युच्येत तदा सामान्यधर्म्मावच्छिन्नोत्पत्तौ सामान्यघटितविशेषधर्म्मावच्छिन्नोत्पादकसामग्र्यपेक्षिता

"अयम्भावः" । सामान्यधर्म्मावच्छिन्नोत्पत्तौ सामान्यधर्म्मवत्प्र-सिद्धनिष्ठयत्किञ्चिज्जन्यतानिरूपितयावज्जनकताश्रयस्यापेक्षित-त्वात्" प्रसिद्धनीलघटो घटः पीतघटो घटः शुक्लघटो घट इ-त्यादिजन्यबोधान्यतमजनकसामग्र्याः घटो घटः इत्यादावसत्वे-नापत्तिविरहादिति दिक् ॥ ननु समवायसंबन्धस्यैव शाब्दबो-धनिष्ठकार्य्यतावच्छेदकतया धर्म्मितावच्छेदकत्वस्य तदनवच्छेद-कतया कथं द्रव्यत्वे शाब्दबोधस्य प्रसिद्धिरिति तटस्थशङ्कामाह धर्म्मितावच्छेदकताया इति ॥ तटस्थशङ्कान्निरस्यति द्रव्यत्वा-दिनिष्ठाया इत्यादिना "अयं भावः" कारणतावच्छेदकधर्म्मघट-कप्रत्यासत्त्या इतरकारणसमवहितयोग्यताज्ञानं यत्र तत्र कार्य्य-तावच्छेदकधर्म्मघटकप्रत्यासत्त्या कार्य्यस्योत्पत्तिरित्यपि नियमा-न्तरं तदवलेनापत्तिं प्रदर्शयति, कार्य्यतावच्छेदकसंबन्धताविरहेपी-ति ॥ आपत्त्यभावं ज्ञापयति तस्या आत्मनिष्ठप्रत्यासत्त्येत्यादिना० । समूहालम्बनस्थलीयापत्तिं वारयति स्वजनकज्ञानीयवृत्तिप्रकारता-निरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेन हेतुतां स्वी-कृत्येत्यनेनेति० ॥ अथ पदधर्म्मिकवृत्तिज्ञानजन्योपस्थितिस्थले त्वापत्तिस्तत्र तथाविधसंबन्धाभावादिति चेन्न, वाच्यत्वादिज्ञान-स्यैव शाब्दबोधजनकत्वाभिप्रायेण तथा प्रतिपादनात् "केचित्तु" स्वविशिष्टप्रकारतासंबन्धेनोपस्थितेः कारणत्वात्० वैशिष्ट्यं च स्व-जनकज्ञानीयवाच्यत्वात्मकवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेद-कतासामानाधिकरण्य स्वजनकज्ञानीयवाच्यत्वसंबन्धावच्छिन्नप्र-कारतानिरूपितविशेष्यतावच्छेदकतासामानाधिकरण्य स्वजनक-ज्ञानीयपदत्वावच्छिन्नविशेष्यतानिरूपितवाचकत्वनिष्ठप्रकारत्वा-

वच्छिन्नविशेष्यतानिरूपितत्वसंबन्धावच्छिन्नप्रकारतावच्छेदकतासामानाधिकरण्य स्वजनकज्ञानीयवाचकत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासामानाधिकरण्य स्वजनकज्ञानीयलक्ष्यत्वप्रकारतानिरूपितविशेष्यतावच्छेदकसामानाधिकरण्य स्वजनकज्ञानीयपदविशेष्यतानिरूपितलक्षकत्वप्रकारतावच्छिन्नविशेष्यतानिरूपितनिरूपितत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासामानाधिकरण्य स्वजनकज्ञानीयपदत्वावच्छिन्नविशेष्यतानिरूपितलक्ष्यत्वसंबन्धावच्छिन्नप्रकारतावच्छेदकतासामानाधिकरण्यैतदन्यतमसंबन्धेनेत्याहुः ॥*॥ कार्य्यकारणभावे व्यभिचारं दर्शयति न च पदार्थेपोति॰ ॥ व्यभिचारं वारयति,, परामर्शकारणताविचारदर्शितदिशेत्यादिना॰ ''अयम्भावः'' विशेष्यत्वानवच्छिन्नत्वस्य निरवच्छिन्नत्वस्य वा प्रकारतायां निवेश्य व्यभिचारोवारणीय इति वस्तुतस्तु स्वजनकोपस्थितीयप्रकारताविशिष्टस्वीयप्रकारतासंबन्धेन शाब्दबोधं प्रति स्वजनकज्ञानीयवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासंबन्धेनोपस्थितिः ''कारणम्'' पदार्थे तादृशप्रकारताया असत्वेन व्यभिचारानवकाश इति॰ । घटत्वे आपत्तिवारयति इति चेत्तर्हि तद्धर्म्मावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति तद्धर्मभेदस्यापि हेतुतायाः स्वीकरणीयतयेत्यादिना । अत्र कल्पे नीलघटो घट इत्याद्यन्वयबोधस्य प्रामाणिकत्वे घटत्वावच्छिन्नप्रकारतायां घटत्वान्यधर्म्मानवच्छिन्नत्वविशेषणदानेन सोप्युपपादनीय इत्युक्तं गदाधरेण तत्र नीलघटो नीलघट इति वाक्याद्बोधप्रसं-

गः नीलघटो घट इति वन्निरुक्तकार्य्यकारणभावानाक्रान्तत्वादुभयभेदस्य केवलान्वयितया नीलघटत्वोभयभेदस्य नीले घटत्वे च सत्वाच्च० । अथ वाचालाः तद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकाभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्रूपभेदः कारणमित्युक्त्वा, तद्वारयन्ति० द्वित्वभेदस्य द्वित्वे बाधात्० । ननु द्वित्वस्य नानात्वेनैकद्वित्वभेदस्यापरद्वित्वे सत्वेन तद्दोषतादवस्थ्यमिति वाच्यम्, निरुक्तसंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्रूपावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकप्रकारताविशिष्टान्यत्वस्य कारणत्वात्० "वैशिष्ट्यं च" स्वावच्छेदकतात्वावच्छिन्नपर्य्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन 'तथा च, विनिगमनाविरहेण नीलघटत्वगतसकलद्वित्वे, तादृशपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य सत्वेन तथाविधप्रकारताविशिष्टान्यत्वविरहात्० । न च उद्देश्यांशेऽधिकावगाहिशाब्दबोधस्याप्रामाणिकत्वं सर्वसम्मतमिदानीं नीलघटो घट इति वाक्यादपि शाब्दबोधः स्याद्घटत्वगतैकत्वभेदस्य नीलघटत्वगतद्वित्वे सत्वादिति वाच्यं स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेकव्यापकत्वसंबन्धेन प्रकारताविशिष्टस्य विवक्षितत्वाद्घटत्वगतैकत्वव्यापकत्वस्य निरुक्तद्वित्वे सत्वेन तथाविधप्रकारताविशिष्टान्यत्वविरहात्० । ननु तथापि नीलसुन्दरः सुन्दरनील इत्यादावगतिः सुन्दरनीलत्वोभयत्वे नीलसुन्दरत्वोभयव्यापकत्वात्० इति चेन्न,, नीलसुन्दरत्वोभयस्मिन सुन्दरनीलत्वोभयत्वस्य विरहान्न व्यापकत्वावकाश इत्याहु-

स्तच्चिन्त्यम् ( मैथिलास्तु ) नीलघटो घटनील इत्यस्य नापत्तिर्नी-लत्वावच्छिन्नावच्छेदकताकाभेदसंबन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतानिरूपितावच्छेदकतासंबन्धेन शाब्दबोधे नीलत्वभेदः कारणमित्युक्त्यैव ग्रन्थकारोक्तप्रकारेण तद्वारणसम्भवात्० लाघवादाहुः । वस्तुतस्तु तद्धर्म्मान्यवृत्तिविषयतासंबन्धनेत्यादिना०। नन्वेतत्कल्पे घटोनघट इत्याद्यनुमितेः शाब्दबोधस्य च वारणाये-त्युक्तं गदाधरेण तच्चासङ्गतं घटभेदव्याप्यस्य घटत्वस्य च विरुद्धतया परामर्शस्याहार्य्यत्वादनुमितिकारणस्यासत्वात्कथं तादृशानुमितेस्सम्भावनेति चेन्न,, भेदव्याप्यवान् घट इति परामर्शस्य घटभेदानुमितौ लाघवमिति लाघवज्ञानस्वीकृतस्यानुमितिजनकत्वात् निरुक्तपरामर्शस्यानाहार्य्यत्वाच्च० ॥ * ॥ अथ अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते(२)निर्व्वाह इत्यादिग्रन्थः अथात्र विषयतासंबन्धावच्छिन्नप्रतियोगिताकेच्छाभाव-

---

(२) टि० न च भवन्मतेपि राजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षं प्रति घटपटाद्यनेकविषयकशाब्दसामग्र्याः प्रतिबन्धकत्व-कल्पनमावश्यकं एवञ्च मन्मतेपि सर्वासां शब्दसामग्रीणां राजस्व-त्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षं प्रति स्वीयविषयताशून्य-तादृशप्रत्यक्षेच्छाविरहविशिष्टशाब्दसामग्रीत्वेनैकरूपेणैव लाघवात्प्रतिबन्धकत्वं एवञ्च राज्ञः पुरुष इति शाब्दसामग्र्यामपि प्रतिबन्धकत्वावच्छेदकाक्रान्तत्वेन नाधिकप्रतिबन्धकताकल्पनं संसर्गतावादिनामिति वाच्यं यत्र शाब्देच्छाशाब्दसामग्री राजस्व-त्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षेच्छाप्रत्यक्षसामग्री तत्र प्र-

विशिष्टभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्री प्रतिवन्धिकेत्युक्तौ नान्यस्येच्छाकालेऽन्यस्यापत्तिर्न वाननुगमः कथं गौरवोत्कोर्त्तनमिति न च भिन्नविषयकत्वस्याव्यावर्त्तकतया राज्ञः पुरुष इति प्रत्यक्षसामग्रीकाले राज्ञः पुरुष इति वाक्याच्छाब्दापत्तिः राजस्वत्वस्य पुरुषस्य च भिन्नतया तद्विषयकत्वस्य निरुक्तप्रत्यक्षे सत्वादिति वाच्यं शाब्दविशिष्टान्यप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकतेत्यस्य विवक्षितत्वान्निरुक्तप्रत्यक्षस्य निरुक्तशाब्दविशिष्टत्वेन प्रतिवध्यतावच्छेदकानाक्रान्तत्वान्नापत्तेरवकाशः वैशिष्ट्यं च,, स्वविशिष्टविशेष्यतानिरूपकत्वसंसर्गेण विशेष्यतायां स्ववैशिष्ट्यञ्च स्वीयप्रकारतावच्छेदकधर्म्मावच्छिन्नप्रकारतानिरूपितत्वस्वीयविशेष्यतावच्छेदकधर्म्मावच्छिन्नत्वोभयसंबन्धेन स्वमत्र शाब्दपरः न च तथापि घटवद्भूतलं राजस्वत्वाभाववान् पुरुषः सुन्दरः इत्यादि प्रत्यक्षादेः स्वसमानाकारकशाब्दविशिष्टत्वेन निरुक्तविशिष्टान्यत्वासम्भवात् तथा च राज्ञः पुरुष इति वाक्यज्ञानघटितशाब्दसामग्रीकाले स्वसामग्रीतः राजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षापत्तिरिति वाच्यं, संसर्गतावादिनये स्वत्वसंबन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरू-

---

त्यक्षापत्तिभयेन शाब्देच्छाया उत्तेजकत्वं वाच्यं तच्च प्रत्येकमेवान्यशाब्देच्छासत्वेन प्रत्यक्षानुपपत्तिः एवञ्च संसर्गतावादिनां राज्ञः पुरुष इति शाब्देच्छाविरहविशिष्टराजस्वत्वाभाववान् पुरुषः सुन्दर इति प्रत्यक्षेच्छाविरहविशिष्टायाः शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनमधिकमिति ॥

पितपुरुषत्वावच्छिन्नविशेष्यताशून्यनिरुक्तेच्छाभावविशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति राज्ञः पुरुष इति वाक्यज्ञानघटितशाब्दसामग्री प्रतिबन्धिकेति "एवं प्रकारतात्वादिनये" राजस्वत्वविशिष्टपुरुषत्वावच्छिन्नविषयताशून्यतादृशविषयतासंबन्धावच्छिन्नेच्छाभावविशिष्टप्रत्यक्षत्वावच्छिन्नं प्रति राज्ञः पुरुष इति वाक्यज्ञानघटितशाब्दसामग्री प्रतिबन्धिकेत्यनुगतसंभवादिति चेन्न, यत्र घटादिप्रत्यक्षत्वेन शाब्दवृत्तीच्छा तद्घटितघटादिप्रत्यक्षसामग्री राज्ञः पुरुष इति शाब्दसामग्री तत्र घटादिप्रत्यक्षानुपपत्तेः निरुक्तप्रत्यक्षस्य इच्छाविषयत्वविरहेण प्रतिबध्यतावच्छेदकाक्रान्तत्वा न्न च स्वीयविषयतावच्छेदकवत्त्वसंबन्धावच्छिन्नप्रतियोगिताकेच्छाभाववत्त्वस्य, प्रतिबध्यविशेषणत्वाद्घटादिप्रत्यक्षत्वस्य इच्छाविषयतावच्छेदकतया तद्वत्त्वस्य तत्र सत्वेन निरुक्तप्रत्यक्षस्य प्रतिबध्यत्वानाक्रान्तत्वान्नानुपपत्तिरिति वाच्यम्,, पटादिप्रत्यक्षादि जायतामितीच्छादशायां निजेच्छारहित-घटादिप्रत्यक्षसामग्रीबलात् निरुक्तशाब्दसामग्रीकाले घटादिप्रत्यक्षापत्तेः निरुक्तेच्छाविषयतावच्छेदकस्य प्रत्यक्षत्वस्य घटप्रत्यक्षेपि सत्वात् यदि स्वीयवियतावच्छेदकतापर्य्याप्त्यधिकरणरूपवत्त्वसंबन्धावच्छिन्नप्रति योगिताकेच्छाभाववत्वस्य तत्र प्रवेशान्न दोषः तादृशपर्य्याप्त्यधिकरणस्य पटविषयकत्व, विशिष्टप्रत्यक्षत्वस्य घटादिप्रत्यक्षे बाधात् न च परमाणुविषयकालौकिकप्रत्यक्षातिरिक्तघटवद्भूतलप्रत्यक्षं जायतामिति विसम्वादिनी प्रत्यक्षेच्छा घटवद्भूतलप्रत्यक्षसामग्री राज्ञः पुरुष इत्यादिशाब्दसामग्रीकाले घटवद्भूतलप्रत्यक्षस्य सर्व्वानुभवसिद्धस्यानुपपत्तिः परमाणुविषयकालौकिकप्रत्यक्षस्या-

प्रसिद्धत्वेन निरुक्तेच्छाविषयतावच्छेदकस्याप्रसिद्धेः किं च तादृशेच्छायास्तादृशसंबन्धस्य व्यधिकरणतया तदभावस्य केवलान्वयित्वेन निरुक्तप्रत्यक्षस्य प्रतिबध्यतावच्छेदकाक्रान्तत्वादेवं स्थिते घटादिप्रत्यक्षं प्रति घटादिप्रत्यक्षेच्छाविरहविशिष्टराज्ञः पुरुष इति वाक्यज्ञानघटितशाब्दसामग्री प्रतिबन्धिकेति भिन्नभिन्नरूपेण प्रतिबन्धकभावस्यावश्यकतया गौरवस्य दुर्वारत्वात् किञ्च इच्छाघटितपटप्रत्यक्षसामग्री इच्छाघटितघटादिप्रत्यक्षसामग्री राज्ञः पुरुषइति वाक्यज्ञानघटितशाब्दसामग्री यत्र तत्र घटपटादिगोचरसमूहालम्बनप्रत्यक्षस्यापत्तिस्तस्य प्रतिबध्यतावच्छेदकानाक्रान्तत्वादतस्तद्वारणाय घटादिविषयकप्रत्यक्षत्वावच्छिन्नं प्रति घटादिविषयकप्रत्यक्षत्वप्रकारताविरहविशिष्टराज्ञः पुरुषः इति वाक्यज्ञानघटितशाब्दसामग्री प्रतिबन्धिका इति रीत्याऽन्यत्रापि विशेषरूपेण प्रतिबन्धकताकल्पनस्यावश्यकत्वेनैकरूपेण प्रतिबध्यबन्धकभावस्य वक्तुमशक्यत्वात् "प्रकारतावादिनां गौरवं दर्शयति संसर्गतावादी स्वत्वोपस्थित्यादीति" संसर्गतावादिनां गौरवं दर्शयति प्रकारतावादी भवन्मतेपीत्यादिना, अथात्र तुल्ययुक्त्या राजस्वत्वाभावव्याप्यस्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुष इति निश्चयस्य तादृशशाब्दबोधं प्रति प्रकारतावादिनयेपि तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वेन तदभावस्य सामग्र्यन्तर्गतत्वेन साम्यसंभवात् कथं गौरवोत्कीर्त्तनमिति चेन्न, स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्याश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वत्वसामान्याभाववान् पुरुष इति निश्चयस्यापि संसर्गतावादिमते तथा प्रतिबंधकतया तदभावस्य सामग्री-

विधया प्रवेशेनैव साम्यं पूर्वोक्तस्याधिक्यात् "प्रकारतावादिनां" तु बाधाभावेनैवोपपत्तिसंभवात् न च प्रकारतावादिनयेपि आश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वत्वसामान्याभावव्याप्यस्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुष इत्याकारकनिश्चयस्य प्रतिबन्धकत्वेन तदभावस्य सामग्रीविधया प्रवेशेन साम्यमिति वाच्यं "संसर्गतावादिनये" राज्ञः पुरुष इति वाक्यजन्य विशिष्टवैशिष्ट्यावगाहिबोधे स्वत्वांशे नियतोराजप्रतियोगिकत्व भासते एवं च राजप्रतियोगिकत्वाभावव्याप्यनिरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वमिति निश्चयस्य स्वत्वसंसर्गकतथाविधबुद्धिप्रतिबन्धकत्वेन तदभावस्यापि तथाविधशाब्दसामग्र्यां प्रवेशाद्गौरवं 'प्रकारतावादिनये' आश्रयासिद्धिविधयैवोपपत्तिसम्भवान्न च प्रकारतावादिनयेपि तादृशवाक्याद्विशिष्टवैशिष्ट्यावगाहिशाब्दबोधे आश्रयत्वांशे राजस्वत्वत्वावच्छिन्नप्रतियोगिताकत्वस्य नियमतो भानेन तादृशशाब्दबुद्धौ राजस्वत्वप्रतियोगिकत्वाभावव्याप्यराजाभाववदाश्रयत्वमिति ज्ञानस्य तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वेन तदभावस्य प्रवेशेन गौरवस्य साम्यान्न दोष इति (३) वाच्यं 'संसर्गतावादिन-

---

(३) टि० अयं भावः संसर्गतावादिनां राजस्वत्वप्रतियोगिकत्वाभावव्याप्य राजाभाववदाश्रयत्वमिति ज्ञानस्य प्रतिबन्धकत्वकल्पनेपि भिन्नविषयकत्वेन राज्ञः पुरुष इति वाक्यजन्यशाब्दबोधसामग्रीप्रतिबध्यत्वकल्पनमावश्यकमिति,, मन्मते च राजप्रतियोगिकत्वाभावव्याप्य निरूपितत्वसम्बन्धावच्छिन्नप्रतियो-

ये' निरुक्तव्याप्यवत्ताविषयकलौकिकप्रत्यक्षस्य भिन्नविषयकत्वेन तं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनं तदभावस्य तं प्रतिकारणत्वकल्पनमावश्यकमिति,, प्रकारतावादिनये,, प्रतिबन्धकत्वं संसर्गतावादिनये प्रतिबध्यत्वं सर्व्वं तु समानं पूर्वोक्तस्य गौरवस्य संसर्गतावादिनां दुर्वारत्वात्० । केचित्तु,, संसर्गतावादिनये स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यनिरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्ववान् पुरुष इति निश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया प्रतिबन्धकत्वस्यावश्यकत्वेन तदभावस्यापि सामग्रीविधया प्रवेशेन गौरवं,, प्रकारतावादिनये आश्रयासिद्धिनिश्चयाभावेनैवोपपत्तौ लाघवस्य दुष्परिहरत्वादित्यस्मद्गुरवः प्राहुः वस्तुतस्तु नात्रगून्थकारस्य निर्भरता किन्तु पूर्वोक्तदोष एव तथाहि,, राजनिरूपितस्वत्वाभाववान् पुरुष इत्याकारकप्रत्यक्षम्प्रतिप्रतिबन्धकत्वं कथितं संसर्गतावादिना स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभाववान् पुरुषः सुंदर इत्याकारकप्रत्यक्षं प्रतिप्रतिबंधकत्वं दर्शितं तदुपरि प्रकारतावादो निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वं प्रमेयमित्याकारकप्रत्यक्षं प्रति प्रतिबन्ध कत्वं प्रदर्श्य पूर्वोक्तमधिकमित्युक्तं तत्समीचीनं निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्वं प्रमे-

---

गिताकराजाभाववत्स्वत्वमिति ज्ञानस्य राज्ञः पुरुष इति वाक्यजन्यशाब्दबोधसामग्रीप्रतिबध्यत्वाकल्पनात् सामग्र्याः आश्रयासिद्धिनिश्चयाभावघटिततया तद्विरहादेव नापत्तिः सम्भवतीति०॥

यमभिधेयं वाच्यं एवं राजाभाववत्स्वत्वं घटाभाववत् पटाभाववत् नीलोत्पलाभाववत् सरोजाभाव वदित्याद्याकारकलक्षाधिकप्रत्यक्षत्वावच्छिन्नप्रतिबध्यतानिरूपितलक्षाधिकप्रतिबन्धकतायाः कल्पनं तादृशतादृशप्रत्यक्षं प्रति शाब्दसामग्रीशून्यत्वस्य कारणत्वकल्पने गौरवस्य दुर्वारत्वादिति॰ न च प्रकारतावादिनये घटपटादिविषयकसहस्रप्रत्यक्षं प्रति स्वत्वोपस्थितित्वेन प्रतिबन्धकत्वास्याधिकस्य कल्पनं तदभावस्य च तं प्रति करणताकल्पनमपि प्रकारतावादिनामधिकमिति वाच्यं प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वं प्रतियोगिताचावच्छेदकस्वरूपा अवच्छेदकस्य स्वत्वोपस्थितत्वस्यैक्येन प्रतिबन्धकत्वस्य प्रकृते नानात्वाभावान्नाधिकप्रतिबन्धता कारणता वेति गौरवात् 'संसर्गतावादिनये' निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्स्वत्वं प्रमेयमभिधेयं वाच्यंमित्याद्याकारकप्रत्यक्षानामेकरूपेण प्र(४)तिबध्यत्वासंभवात् किञ्च

(४) टि० । न च निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावत्वावच्छिन्नप्रकारतानिरूपितस्वत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताशालिप्रत्यक्षत्वेनैकरूपेण प्रतिबध्यत्वेन गौरवमिति वाच्यं यत्र राज्ञः पुरुष इति शाब्दसामग्री निरूपितत्वसम्बन्धावच्छिन्नराजाभाववत्स्वत्वं प्रमेयमिति प्रत्यक्षसामग्री तादृशप्रत्यक्षं जायतामितीच्छा तत्र प्रतिबन्धकता वारणीया यदि उक्तप्रकारताशालिप्रत्यक्षेच्छाच्छाविरहविशिष्टत्वस्य प्रतिबंधकतावच्छच्छेदकतेच्छानिवेश स्तदा राजाभाववत्स्वत्वं प्रमेयमिति प्रत्यक्षसामग्री राजाभाववत्स्वत्वं घटाभाववदिति

स्वत्वोपस्थितिशून्यत्वकालीन घटादिविषयकसहस्रप्रत्यक्षं प्रति राज्ञः पुरुष इत्यादिवाक्यज्ञानघटितसामग्र्याः प्रतिबंधकत्वं प्रकारतावादिनये च, स्वत्वोपस्थित्यभावेन सामग्र्यसत्त्वान्न प्रतिबन्धकत्वकल्पनमिति अन्ये तु संसर्गतावादिनये स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान् पुरुष इति व्याप्यवत्तानिश्चये राजस्वत्वासमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य स्वत्वत्वनिष्ठावच्छेदकताघटितस्य पुरुषांशे राजनिरूपितत्वस्वत्वत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य च विषयत्वेन प्रतिबन्धकतायां कारणताया अधिकस्यावच्छेदकत्वेन गौरवम् 'प्रकारतावादिनये च' तादृशनिश्चये राजाभावसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावस्यावच्छेदकताघटितस्य विषयत्वेनाल्पस्य तत्त्वावच्छेदकत्वेन लाघवमित्याहु स्तन्न साध्याभाववद्वृत्तित्वावगाहिव्याप्यवत्तानिश्चयस्य प्रकारतावादिनये राजत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नराजनिष्ठावच्छेदकतानिरूपितस्वत्वत्वनिष्ठावच्छेदकतानिरूपितस्वत्वनिष्ठप्रतियोगिताकाभावो नास्ति इति प्रतीतिसिद्धतालब्धयावलीढावच्छेदकताकप्रतियोगिताकसाध्याभावाधिकरणनिरूपितवृत्तित्वन्नास्तीति प्रतीतिसिद्धाभावावगाहिनिश्चयस्य कतिपयांशे तालब्धयावलीढावच्छेदकताघटितप्रतियोगिताकाभावविषयकतया

---

प्रत्यक्षं जायतामितीच्छा तत्र प्रतिबन्धकत्वन्न स्यात् अतः भिन्नभिन्नरूपेणैव प्रतिबध्यप्रतिबन्धकभावः सम्यक् तथा चोक्तगौरवस्य दुर्द्धरत्वादिति भावः ॥ S. S. ॥

तादृशनिश्चयनिष्ठप्रतिबन्धकतायां तादृशनिश्चयाभावनिष्ठसामग्रीविधया कारणतायामधिकस्यावच्छेदकत्वेन विषयतासमसंख्यप्रतिबन्धकतायाः कारणतायाश्च कल्पनेन महागौरवापत्तेः न च प्रकारतावादिनये राजनिरूपितस्वत्ववान् पुरुष इत्याकारकशाब्दं प्रति राजाभाववान् राजस्वत्वाभाववान् राजाभाववान् पुरुष इत्यादि नाना निश्चयनिष्ठप्रतिबन्धकतायां सकृदेव राजस्वत्वाभाववान् पुरुष इति निश्चयस्य राजाभावव्यापकोराजस्वत्वाभावः राजाभाववांश्च पुरुष इत्यादि नाना निश्चयनिष्ठप्रतिबन्धकतायां सकृदेव राजस्वत्वाभावविषयताया अवच्छेदकत्वं 'संसर्गतावादिनां नये' स्वत्वसम्बन्धेन राजविशिष्टः पुरुष इति बुद्धिं प्रति राजस्वत्वाभाववान् राजाभाववान् राजस्वत्वाभाववान् पुरुष इति निश्चयस्य राजस्वत्वाभावव्यापको राजाभावः राजस्वत्वाभाववान् पुरुष इति निश्चयस्य प्रतिबन्धकत्वे असकृतराजस्वत्वाभावविषयतायाः गुरुतरायाः प्रतिबन्धकतावच्छेदकत्वेन गौरवमिति वाच्यं 'प्रकारतावादिनये' घटाभाववान् राजस्वत्वाभाववान् घटाभाववान् पुरुष इत्याद्यनेकनिश्चयप्रतिबन्धकतायां राजस्वत्वाभावविषयतायाः गुरुभूतायाः अवच्छेदकत्वेन गौरवं 'संसर्गतावादिनये च' घटाभाववान् राजाभाववान् घटाभाववान् पुरुष इत्याद्यनेकनिश्चयनिष्ठज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतायां लघुतरराजाभावविषयत्वस्यावच्छेदकत्वेन लाघवसम्भवात् किञ्च, व्यापकसामानाधिकरण्यरूपव्याप्तौ प्रतियोगित्वांशे साध्यतावच्छेदक-तदितरोभयावच्छिन्नत्वस्य प्रविष्टत्वेन तदंशे गौरवस्य प्रकारतावादिनये दुर्वारत्वात् 'अत्र ब्रूमः' संसर्गतावादिनये राजविशिष्टः स्वत्वसम्बन्धेन पुरुष इति शाब्दम्प्रति स्वत्वसम्बन्धावच्छिन्न-

प्रतियोगिताकराजाभावव्याप्यस्वत्वसामान्याभाववान् पुरुष इति निश्चयस्य एवं स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान् पुरुष इति निश्चयस्य एवं स्वत्वसंबंधावच्छिन्नप्रतियोगिताकराजाभावव्याप्यं यत् निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभाववत्स्वत्वं तद्वान् पुरुष इत्याद्यनेकविधनिश्चयानां तदभावव्याप्यवत्तानिश्चयमुद्रया अनेकप्रतिबन्धकत्वकल्पनं तत्तन्निश्चयाभावानां प्रतिबन्धकाभावमुद्रया कारणत्वमिति तत्तत्प्रतिबन्धकाभावानाञ्च शाब्दसामग्रीघटकत्वेन भिन्नविषयकप्रत्यक्षप्रतिबन्धकतायाश्च गौरवं 'प्रकारतावादिनये च' राजस्वत्वाभावव्याप्यराजाभाववान् पुरुष इति एकविधनिश्चयस्यैव प्रतिबन्धकत्वं तदभावस्यैव प्रतिबन्धकाभावमुद्रया कारणत्वं भिन्नविषयकप्रत्यक्षसामग्र्याश्च प्रवेश इति लाघवमिति संक्षेपः ॥ जानातीत्यादौ आख्यातस्य निरर्थकत्वमभ्युपगच्छतां चिन्तामणिकाराणां मतं दूषयति शिरोमणिमतमाश्रयते "गदाधरः" तत्राश्रयत्वे निरूढ़लक्षणामभ्युपगच्छतां दीधितिकाराणां पुनरेष आशयः यत्र धातोः ज्ञानाश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र चैत्रांशे धात्वेकदेशस्य ज्ञानादेरन्वयानुपपत्त्या इत्यादिना,, अत्रेदं चिन्त्यं लक्षणा तात्पर्य्यानुपपत्तिपूर्विका अन्वयानुपपत्तिपूर्विका भवति आद्या यष्टिं प्रवेशय इत्यत्र यष्टिपदस्य यष्टिधरे दण्डिनि,, द्वितीया गङ्गायां घोष इत्यत्र घोषपदस्य प्रवाहे वा गङ्गापदस्य तीरे,, यत्र जानाति चैत्रः चैत्रे ज्ञानसम्बन्धस्य बाधात् तात्पर्य्यानुपपत्तेरभावाच्च लक्षणाज्ञानस्यावश्यकत्वाभावान्मैथिलानां मणिकाराणाम्मतमेव साधु ग्राह्याभावानवगाहिज्ञानस्याप्यनुभवसिद्धप्रति-

बन्धकताकल्पने प्रतिबन्धकत्वानुपपत्तिदोषविरहादतो दोषान्तर-माह नञ्पदं विना यत्रेत्यादिना उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्य्याप्तेरेव संसर्गतोपगमात् तत्राकाशत्वव्याप्यतायां द्वित्वपर्य्याप्त्यवसत्वेनातिप्रसंगविरहात् "वैशिष्ट्यञ्च" वैज्ञानिकं न तु वास्तवं तेन यत्र योग्यताभ्रमजन्यात्राकाशावित्यादि भट्टः अथात्र किं वैज्ञानिकं यदि ज्ञाननिरूपितविषयतात्मकवैशिष्ट्यं तदा उद्देश्यतावच्छेदकव्याप्यत्वविषयकज्ञानविषयकपर्य्याप्तेः संसर्गता वक्तव्या एवञ्च द्वित्वपर्य्याप्तौ गगनत्वव्याप्यत्वज्ञानविषयत्वस्याबाधितत्वात् कथं संसर्गतावच्छेदकांशे भ्रमत्वत्वादिति चेन्न, उद्देश्यतावच्छेदकव्याप्यत्वनिष्ठावच्छेदकतानिरूपितपर्य्याप्तिनिष्ठसंसर्गतायां तात्पर्य्यात् यथा संसर्गांशे गुणीयत्वस्य बाधेपि गुणीयसंयोगेन घटवानित्यत्र संयोगनिष्ठसंसर्गता गुणीयत्वावच्छिन्ना-तथा प्रकृतेपीति यथा ज्ञाने गुणीयत्वविशेषणं संयोगश्च विशेष्यः प्रतीयते न तु गुणीयत्वाश्रयः संयोग स्तथा प्रकृतेपीति ननु संसर्गतावच्छेदकप्रकारतात्मकविषयत्वविरहेण तदभाववति तत्प्रकारताकत्वस्य भ्रमत्वस्यानुपपत्तिरित्यत आह संसर्गतावच्छेदकांशे भ्रमत्वस्यान्यत्रोपपादितत्वादिति "अयं भावः" तदभाववन्निष्ठविषयतानिरूपित तन्निष्ठविशेष्यताकत्वस्य भ्रमत्वात् संसर्गांशे संसर्गघटकांशे च तथा विधस्यैव तस्य विवक्षितत्वान्न काप्यनुपपत्तिरिति, न च संयोगेन पर्वतो वह्निमानित्यस्य भ्रमत्वमापाद्यते समवायेन वह्न्यभाववत्वस्य पर्व्वते सत्वात् इति वाच्यं विशेषणताविशेषणताविशिष्टविषयताकत्वस्य सत्वात् विशेषणतावैशिष्ट्यञ्च स्वनिरूपितत्व स्वविशिष्टप्रतियोगिताकाभाववन्निष्ठत्वोभय-

सम्बन्धेन प्रतियोगितायां विशेषणतावैशिष्ट्यञ्च,, स्वानवच्छेदक-सम्बन्धावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्वोभयसंसर्गेण स्वं विशेष्यता अथ वा स्वावच्छिन्नत्व स्वावच्छेदकसम्बन्धावच्छिन्नत्वैतद्द्वयसम्बन्धेन तद्वाच्यं स्वं विशेषणता न च तथापि संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्यापि कालिकेन पर्वते सत्वात् संयोगेन वह्निमान् पर्वत इति ज्ञानस्य भ्रमत्वं दुर्वारमेवेति वाच्यं द्वितीयसम्बन्धघटकाभाववन्निष्ठत्वेन स्वाभाववत्ता च स्वनिरूपितप्रतियोगिताविशिष्टप्रकारतानिरूपितद्वित्वावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकस्वनिष्ठप्रकारतावच्छेदकसम्बन्धेन विवक्षितन्तत्त्वात्तथाविधस्वरूपसम्बन्धेन वह्न्यभाववत्त्वस्य पर्वते बाधान्न दोषः प्रकारतायां प्रतियोगितावैशिष्ट्यञ्च स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्व स्वानवच्छेदकसम्बन्धावच्छिन्नत्वैतत्त्रितयसम्बन्धेन स्वं प्रतियोगिता अधिकं मदीयसिद्धान्तसारसामान्यनिरुक्तिव्याख्यायां द्रष्टव्यम्० यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपितैकत्वद्वित्वादिप्रकारता तत्रैव शुद्धायाः पर्य्याप्तेरिति "गादाधरी" अथात्र धवखदिराविति अत्र एका धवत्वावच्छिन्ना विशेष्यता अपरा खदिरत्वावच्छिन्नविशेष्यता इति नानाधर्म्मावच्छिन्नत्वं न कुत्रापि विशेष्यताया दृष्टिचरमिति चेन्न, धर्मांशे नानात्वेनान्यधर्म्मविशिष्टा यत्र एकत्वद्वित्वप्रकारता इति तस्यार्थः प्रकारतायां धर्मवैशिष्ट्यञ्च स्वावच्छिन्नविशेष्यतानिरूपितत्वस्वभिन्नधर्म्मावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेन स्वमत्र धर्म्मपरं विशेष्यतायां नानात्वतात्पर्य्यविशेष्यताविशिष्टा यत्र एकत्वद्वित्वप्रकारता इति तस्यार्थः

वैशिष्ट्यञ्च,, स्वनिरूपितत्वस्वभिन्नकिञ्चिद्धर्म्मावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेन स्वं विशेष्यता एव धवखदिरावित्यत्र एकाया एव द्वित्वप्रकारताया धर्म्मद्वयावच्छिन्नविशेष्यतानिरूपितत्वसत्वान्नानुपपत्तिरिति एतेन आकाशावित्यत्र आकाशत्वावच्छिन्नविशेष्यतायामपि एकत्वभिन्नसंख्यावत्त्वसत्वेपि निरुक्तोभयसम्बन्धेन धर्म्मविशिष्टत्वाभावान्न केवलपर्य्याप्तेः समवायसंसर्गतामादाय प्रामाण्यावकाश इति दिक् । यत्रैकधर्म्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकपर्य्याप्तेः संसर्गता नियमः यत्र धर्म्मद्वयादेस्तथात्वं तत्र केवलपर्य्याप्तेः समवायस्यैव वा संसर्गता इत्यादि 'गादाधरी' स्वत्वोद्रेककालाकाशासागतत्रित्वादि तात्पर्य्येण कालाकाशा इति प्रयोगस्य प्रामाण्यापत्तिः त्रित्वसमवायस्य कालाकाशादावबाधितत्वात्तत्रापि धर्म्मद्वयादेः त्रित्वोद्देश्यतावच्छेदकत्वादिति चेन्न., यत्र नानाधर्म्मावच्छिन्नोद्देश्यताविशिष्टव्यासज्यवृत्तिनिष्ठैकविधेयता भवति तत्रैव केवलपर्य्याप्तेः समवायस्य वा संसर्गत्वाद्युपगमात् वैशिष्ट्यञ्च,, स्वनिरूपितावच्छेदकत्वावच्छिन्नाभाववद्वृत्तिनिष्ठत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन स्वमत्वोद्देश्यता तथा च" कालत्वाकाशत्वोभयधर्म्मावच्छिन्नोद्देश्यतानिरूपितावच्छेदकताश्रयसामान्याभाववद्विन्निरूपितवृत्तित्वस्य त्रित्वेसत्वेन त्रित्वनिष्ठविधेयतायां तद्वृत्तित्वसत्वान्निरुक्तसम्बन्धविरहात्केवलपर्य्याप्तेः समवायस्य वा संसर्गत्वाभावान्न दोषः नचोद्देश्यभेदेनोद्देश्यतायाः भिन्नत्वपक्षे धवखदिरादावगतिस्तुल्ययुक्तेरिति वाच्यं स्वनिरूपितविधेयतानिरूपितोद्देश्यतावच्छेदक-

ताश्रयसामान्याभाववद्वृत्तिनिष्ठत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन वैशिष्ट्यस्याभिधानात् द्वित्वनिष्ठविधेयतानिरूपितत्वेन धवत्वावच्छिन्नखदिरत्वावच्छिन्नोद्देश्यतयोरनुगमसम्भवान्न दोषः ननु प्रमेयाकाशावित्यत्र प्रमेयावित्यत्र चापत्तिः उद्देश्यतावच्छेदकस्य केवलान्वयितया तदभावस्याप्रसिद्धत्वेन तादृशसम्बन्धस्याप्रसिद्धत्वादिति चेन्न,, स्वविशिष्टोद्देश्यतानिरूपितत्वसम्बन्धेन वैशिष्ट्याभिधानादुद्देश्यतायां, उद्देश्यतावैशिष्ट्यश्च स्वनिरूपितविधेयताश्रयव्यापकावच्छेदकतानिरूपितत्वसम्बन्धेन व्यापकतावच्छेदकतायां स्वाश्रयवत्तासम्बन्धेन ग्राह्या एवञ्च प्रमेयत्वनिष्ठावच्छेदकतायां स्वाश्रयप्रमेयवत्तासंबन्धेन द्वित्वव्यापकत्वस्याक्षतत्वान्नाप्रसिद्ध्यवकाश इति विभावनीयं ऋजवस्तु यथा यत्रैकधर्म्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्यपर्य्याप्तेः संसर्गतानियमः यत्र धर्म्मद्वयादेस्तथात्वं तत्र केवलपर्य्याप्तेः समवायस्य वा तथा यत्रैकधर्म्मस्य वा त्रित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्यपर्य्याप्तेः संसर्गतानियमः यत्र धर्मत्रयादेः तथात्वन्तत्र केवलपर्य्याप्तेः समवायस्य वा संसर्गता इत्युक्ता वेव ग्रन्थकारोक्तिप्रदर्शनेन सर्वसामञ्जस्ये न कोपि दोषः त्रित्वपर्य्याप्तौ कालत्वाकशत्वयोर्व्याप्यत्वबाधात् "वस्तुतस्तु केवलपर्य्याप्तेः सर्वत्र सम्बन्धत्वोपगमेपि नातिप्रसङ्गः एकमात्रविशेष्यकद्वित्वादिप्रकारकज्ञानस्य तद्वति तत् प्रकारकत्वसत्त्वेपि न प्रमात्वात् यत्र स्तद्वति तत्प्रकारकत्वं यथाश्रुतन्न प्रमात्वं अपि तु तद्धर्म्माधिकरणतावच्छेदकयत्किञ्चिद्धर्म्मव्यापकव्यापकं तद्धर्म्मनिष्ठप्रकारतानिरूपितविशेष्यताक-

त्वं व्यासज्यवृत्तिद्वित्वादेरुभयादिवृत्तिधर्म्म एवाधिकरणतावच्छेदकः तद्व्यापकत्वञ्च नैकमात्रविशेष्यकद्वित्वादिप्रकारकविशेष्यतायाः अव्यासज्यवृत्तिद्रव्यत्वादेश्च तत्तद्व्यक्तित्वादिकमप्यधिकरणतावच्छेदकं अत एकमात्रविशेष्यकद्रव्यत्वादिप्रकारकबुद्धेः प्रमात्वनिर्वाहः न च घटपटा विति घटपटोभयत्वप्रकारतानिरूपिता घटपटोभयवृत्तिविशेष्यता घटत्वपटत्वप्रकारताभेदाद्भिन्ना तादृशो च कापि विषयता न घटपटोभयत्वाधिकरणतावच्छेदकधर्म्मव्यापिकेत्यव्याप्तिरिति वाच्यं तद्धर्म्माधिकरणतावच्छेदकयत्किञ्चिदेकधर्म्मव्यापकस्त्वो यतद्धर्म्मनिष्ठयत्किञ्चिदेकप्रकारतानिरूपितविशेष्यताकत्वस्य विवक्षितत्वादिति प्राहुः ॥*॥*॥ शिवम् ।

इति मैथिल—नै० श्रीमद्विश्वनाथशर्म्मकृत-व्युत्पत्तिवादविवृतौ पर्य्याप्त्यवधिखण्डम् ।
श्रीकाशी विश्वनाथादिभ्यो नमः ॥ S. ॥



ध्यात्वा गुरुपदद्वन्द्वं स्मृत्वा सिद्धान्तसंग्रहम् । क्रियते विश्वनाथेन ज्येष्ठादीनां परिष्कृतिः ॥ "अथ चैत्रस्यायं ज्येष्ठ-पुत्र इत्यत्र पुत्रनिष्ठज्येष्ठत्वं स्वजन्यत्वविशिष्टपुंस्त्वसम्बन्धेन । पितृविशिष्टत्वं यद्युच्यते तदा कनिष्ठे मध्यमे चातिव्याप्तिरिति चेन्न,, स्वजन्यत्व स्वजन्यपुत्रोत्पत्तिदृध्वंसानधिकरणोत्पत्तिकत्वो-भयसम्बन्धेन पितृविशिष्टत्वस्य विवक्षितत्वात्० । तथा च कनि-ष्ठे मध्यमे च वास्तविकज्येष्ठपुत्रोत्पत्तिदृध्वंसाधिकरणोत्पत्तिक-त्वस्य सत्वेन तादृशसंबन्धस्यासत्वात् अतिव्याप्तिविरहात्० ॥ "कनिष्ठत्वञ्च" स्वजन्यपुत्रोत्पत्तिप्रागभावानधिकरणक्षणोत्पत्ति-कत्व स्वजन्यत्वविशिष्टपुंस्त्वोभयसंबन्धेन पितृविशिष्टत्वम्० । प्रागभावानङ्गीकारकमते तु स्वजन्यपुत्रोत्पत्तिध्वंसानधिकरणक्ष-णोत्पत्तिकभिन्नत्व स्वजन्यपुत्रोत्पत्तिपूर्वत्वविशिष्टं यत् स्वजन्य-पुत्रोत्पत्त्युत्तरत्वं तद्विशिष्टक्षणोत्पत्तिकभिन्नत्व स्वजन्यत्वविशिष्ट-पुंस्त्वैतत्त्रितयसंबन्धेन पितृविशिष्टत्वं तदिति० ॥ "मध्यमत्व-ञ्च" स्वजन्यपुत्रोत्पत्तिध्वंसाधिकरणत्व स्वजन्यपुत्रप्रागभावाधिक-रणत्वोभयसम्बन्धेन स्वविशिष्टं यत्क्षणं तदुत्पत्तिकत्व स्वजन्य-त्वविशिष्टपुंस्त्वोभयसम्बन्धेन पितृविशिष्टत्वम्० । तथा च कनि-ष्ठोत्पत्तिक्षणे स्वजन्यपुत्रप्रागभावाधिकरणत्वस्याभावेन ज्येष्ठो-त्पत्तिक्षणे स्वजन्यपुत्रोत्पत्तिध्वंसाधिकरणत्वस्याभावेन न कनिष्ठे ज्येष्ठे च मध्यमत्वलक्षणस्यातिव्याप्तिरिति० । लक्षणसमन्वयः स्वयमेवोहनीयः० ॥ नन्वेकपुत्रस्थले चैत्रस्यायमेव ज्येष्ठोऽयमे-व कनिष्ठोऽयमेव मध्यमस्तत्र मध्यमत्वलक्षणस्याव्याप्तिस्तथाहि" तत्र पुत्रोत्पत्तिक्षणे स्वजन्यपुत्रप्रागभावाधिकरणत्वस्य द्वितोय-

सम्बन्धस्य विरहात् निरुक्तोभयसम्बन्धेन पितृविशिष्टस्यासत्वात् इति चेन्न,, स्वजन्यपुत्रोत्पत्तिध्वंसाधिकरणत्वविशिष्टं यत् स्वजन्यपुत्रप्रागभावाधिकरणं तदुत्पत्तिकभिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वसंबन्धेन पितृविशिष्टत्वस्य मध्यमत्वलक्षणत्वान्न दोष "स्तथा हि" एकपुत्रस्थले तादृशसम्बन्धस्य व्यधिकरणतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकपितृत्वावच्छिन्नाभावस्य केवलान्वयित्वात्० पुत्रे पितृविशिष्टस्य सत्वात्० । न च घटपटादावतिव्याप्तिः तस्य तत्रापि केवलान्वयितया सत्वादिति वाच्यम्० । स्वजन्यत्वविशिष्टपुंस्त्वघटितोभयसम्बन्धेन वैशिष्ट्यस्य विवक्षितत्वाद् घटादौ स्वजन्यत्वविरहान्नातिव्याप्तिः "तथा चेदं निकृष्टलक्षणम्" पितृविशिष्टत्वे सति पुंस्त्वम्मध्यमपुत्रत्वम्० "पितृवैशिष्ट्यञ्च" स्वविशिष्टक्षणोत्पत्तिकभिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्व स्वजन्यत्वोभयसंबन्धेन स्वपदं पितृपरं संबन्धघटकलक्षणे स्ववैशिष्ट्यञ्च,, स्वजन्यपुत्रोत्पत्तिध्वंसाधिकरणत्व स्वजन्यपुत्रप्रागभावाधिकरणत्वोभयसम्बन्धेन स्वपदमत्र पितृपरम्० तादृशसम्बन्धे पुत्रादिजननकर्तृ पितृप्रतियोगित्वात् तत्र ज्येष्ठे कनिष्ठे च नातिव्याप्तिस्तथा हि" मध्यमपुत्रोत्पत्तिक्षणे स्वजन्यज्येष्ठपुत्रध्वंसाधिकरणत्वस्य कनिष्ठपुत्रप्रागभावाधिकरणत्वस्य सत्वात् निरुक्तोभयसंबन्धेन स्वविशिष्टक्षणोत्पत्तिकत्वं मध्यमे वर्त्तते स्वविशिष्टक्षणोत्पत्तिकभिन्नत्वञ्च कनिष्ठे वर्त्तते " तथा च" तद्भिन्नत्वसंबन्धावच्छिन्नपित्राश्रयता मध्यमे नास्तीति तत्सम्बन्धावच्छिन्नप्रतियोगिताकपित्रभावस्य तत्र सत्वान्न कोपि दोषः पदमादधातीति०॥ अत्रैतादृशसम्बन्धस्य वृत्त्य

नियामकतया प्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽसम्भवापत्तेरिति चेन्न, तत्सम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्य विवक्षितत्वादवच्छेदकतायां वृत्त्यनियामकसंयोगावच्छिन्नत्वस्य चैत्रो न पचतीति वाक्यस्य प्रामाण्यानुरोधेन सर्व्वसम्मतत्वात्॰ । न च एकपुत्रस्थले तादृशसंबन्धस्य व्यधिकरणतया तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्यालीकत्वेन प्रसिद्धेरिति वाच्यम्,, स्वविशिष्टक्षणोत्पत्तिकभिन्नत्वसंवन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभाववत्त्व स्वजन्यत्वोभयसम्बन्धेन पितृविशिष्टत्वस्याविवक्षितत्वात् "विशेष्यत्वाभावश्च" प्रमीयविशेष्यताप्रतियोगिकस्वरूपसंवन्धावच्छिन्नप्रतियोगिताको ग्राह्यः० । क्षणे वैशिष्ट्यञ्च पूर्व्ववत्० । प्रकारतायां व्यधिकरणसंबन्धावच्छिन्नत्वस्य व्यधिकरणधर्म्मावच्छिन्नत्वस्य सर्व्वसम्मतत्वात् अन्यथा वह्नित्वेन गुञ्जापुञ्जावगाहि–वह्निमान् पर्व्वत इति ज्ञानप्रकारतावच्छेदकवह्नित्वे न स्यात् । न स्याच्च संयोगेन गुणवान् घट इति ज्ञानप्रकारतावच्छेदकतासंयोग इति तथा चोक्तदोषाणामवकाशाभावः० ॥*॥

## इति मैथिल नै०-श्रीविश्वनाथशर्म्म-रचिता ज्येष्ठादिपरिष्कृतिः० ॥

---

श्रीगणेशाय नमः ॥ अथ लकारार्थवादः ॥ भैयोशर्म्मगुरुन्नत्वा स्मृत्वा तद्वाक्यविस्मृतम्० । कृतावेव लकाराणां शक्तौ-

युक्तिः प्रदर्श्यते० ॥ लकाराणां कृतावेव शक्तिः "इति न्याय-मतम्"। आश्रये "शक्तिरिति वैयाकरणमतम्"। अत्र न्याय-मते तण्डुलं पचति इति वाक्यजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति तिपदं कृतिविषयकबोधजनकत्वप्रकारकभगवदिच्छीयविषयतावदित्याकारकशक्तिज्ञानजन्यकृतित्वप्रकारकोपस्थितित्वेन कारणता० । तत्र कृतिविषयकोपस्थितिशक्तिज्ञानयोः कार्य्यकारणभावे लाघवम्० कृतित्वजातेः शक्यतावच्छेदकत्वादेवं भिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकतया-कृतित्वप्रकारकोपस्थितित्वेन लघुधर्म्मेण च प्रतिबन्धकत्वाच्च लाघवम्० । वैयाकरणमते तु आश्रयत्वविशिष्टावच्छिन्नवाचकताज्ञानाश्रयत्वत्वावच्छिन्नाश्रयत्वप्रकारकोपस्थित्योः कार्य्यकारणभावे गौरवं शक्यतावच्छेदकतयोः सखण्डत्वादेवं भिन्नविषयकप्रत्यक्षं प्रति तादृशशाब्दसामग्रीघटकाश्रयत्वप्रकारकोपस्थितेः आश्रयत्वत्वप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाश्रयत्वप्रकारताकोपस्थितित्वेन एवं विशेष्यतानिरूपितप्रकारत्वावच्छिन्नाश्रयत्वनिष्ठविशेष्यतानिरूपिताश्रयत्वप्रकारकोपस्थितित्वेन इति विनिगमकाभावेन प्रतिबन्धकताधिक्यम् अवच्छेदकगौरवं च इति स्थितिः० । 'अत्र नवीनवैयाकरणाः" आश्रयत्वस्याखण्डोपाधितया स्वरूपतोभानस्वीकारान्न शक्यतावच्छेदकता गुरुतरा न वा विनिगमकाभावेन प्रतिबन्धकताधिक्यम् अवच्छेदकगौरवञ्चेत्यपि दोषाणामवकाश इत्याहुः तन्न आश्रयभेदेनाश्रयत्वस्य भिन्नत्वात् चैत्रनिष्ठाश्रयत्वव्यक्तेः शक्यतावच्छेदकत्वे मैत्रः पचतीति वाक्यस्याप्रामाण्यप्रसङ्गात् न च सकलाश्रयनिष्ठाश्रय-

त्वं लाघवादेकमेवेति वाच्यम्., कालिकसम्बन्धेन पाकस्य काले सत्वेन कालः पचतीति वाक्यस्य प्रामाण्यापत्तेः अधिकरणत्वस्य खण्डतया समवायसम्बन्धावच्छिन्नत्वस्य तत्र निवेशाऽसम्भवा-त् निवेशे वा भवन्नये आश्रयत्वस्यैक्येन समवायसम्बन्धावच्छि-न्नाश्रयतायाः कालिकसम्बन्धावच्छिन्नाश्रयतायाश्चाभेदात्पाक-निरूपिताश्रयत्वस्य काले दुर्व्वारत्वात् 'अथ भूवादिसूत्रव्याख्या-वसरे क्रियाप्रधानमाख्यातमिति भाष्यप्रामाण्यात्पचति चैत्र इति वाक्यतश्चैत्रस्याभेदसम्बन्धेनाश्रये ऽन्वयः आश्रयस्य च समवाय-सम्बन्धावच्छिन्नाधेयतासम्बन्धेन पचधात्वर्थे व्यापारेऽन्वयः तथा च कालाभिन्नाश्रयस्य समवायसंबन्धावच्छिन्नाधेयतासंबन्धेन व्यापारे सत्वेन कालः पचतीति वाक्यस्य प्रामाण्यानवकाशादि-ति चेन्न,, आश्रयत्वस्यैकत्वस्य यदि सिद्धिर्भवति तदैवैतादृश-रीत्या वक्तुं शक्यते तदैव न स्यात्सएव न सम्भवति "तथा च,, समवायेन वह्न्याश्रयत्ववान् वह्न्यवयव इति वत्संयोगेन वह्न्या-श्रयत्ववान् वह्न्यवयव इत्यपि स्यात् । तयोरभेदात्० "किञ्च., संयोगेन वह्न्यधिकरणतावान्पर्व्वत इत्यत्र तृतीयान्तार्थसंयोगाव-च्छिन्नत्वस्यान्वयस्य विलयप्रसङ्गात्० । अधिकरणत्वस्याख-ण्डत्वेन भवन्नये संबन्धावच्छिन्नत्वा न्न च वैशिष्ट्यं तृतीयार्थः स चावच्छिन्नाधेयात्मकः तत्रावच्छिन्नत्वैकदेशेवच्छेदकत्वे संयो-गस्यान्वयस्तथाच,, वह्निनिष्ठसंयोगसंबन्धावच्छिन्नाधेयतानिरू-पकाधिकरणत्ववान् पर्व्वत इत्याकारकस्तत्रान्वयसम्भवस्तस्मान्ना-न्वयविलयप्रसङ्ग इति वाच्यम् पूर्व्वोक्तापत्तेः तथाप्यनुद्धा-रात्० । अथ यथा वायौ समवायस्यैकत्वे रूपवत्ताप्रतीतेः प्र-

माणत्ववारणं तथा प्रकृतेपीति चेन्न,, तत्र समवायसत्त्वेपि रूपाभावादित्युक्तं मुक्तावल्याम्०। तथा च, संबन्धसंबन्ध्युभयसत्ताधीनविशिष्टबुद्धिव्यवहारस्य सर्व्वसम्मतत्वात् 'तच्च' वायौ समवायस्यैकत्वरूपवत्ताप्रतीतेः प्रमात्ववारणेनास्तीति प्रकृते वह्न्यवयवे संयोगस्य समवायस्य वह्नेरधिकरणत्वस्य च सर्व्वस्यैव सत्वात् "तथा., वक्तुमशक्यत्वात् न च संयोगसंबन्धावच्छिन्न वह्नित्वावच्छिन्नाधेयतानिरूपकत्वविशिष्टाधिकरणतात्वावच्छिन्नाधिकरणत्वस्य वह्न्यवयवे विरहान्नापत्तिरिति वाच्यम्, तादृशाधिकरणतात्वावच्छिन्नाधिकरणत्वस्य पुनरप्यधिकरणत्वाभिन्नतया तत्र नास्तीति वक्तुमशक्यत्वादिति०। अधिकरणत्वस्याभिन्नत्वाङ्गीकर्तॄणामत्राधिकरणता नास्तीति रीत्या कथनम्० अथ नास्तीति रीत्या कथनं मुखमस्तीति वक्तव्यम् दशहस्तहरीतकीति वाक्यवदेवेति०। "अथाधिकरणत्ववादिनां वैयाकरणानां नवीनानां च मतं सुदूरपराहतम्०। "किञ्च" विशिष्टसत्तानिष्ठाधेयत्वस्य सत्तानिष्ठाधेयत्वस्यानतिरिक्तत्वपक्षे समवायसंबन्धावच्छिन्नविशिष्टसत्तानिष्ठाधेयतानिरूपकाधिकरणत्वस्य गुणादौ सत्वेन समवायेन विशिष्टसत्ताधिकरणत्ववान् गुण इति प्रतीतेः भवदुक्तरीत्या प्रमात्वनिराकरणं गोर्व्वाणगुरूणामप्यशक्यमिति "मन्नये तु"अधिकरणताया नानात्वात्समवायसंबन्धावच्छिन्नगुणकर्म्मान्यत्वविशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य तत्रासत्वेन तादृशप्रतीतेः प्रमात्वशङ्काया अनवतारात्०। नन्वधिकरणत्वस्य नानात्वेऽपि, समवायस्यैक्येन समवायसंबन्धावच्छिन्नाधिकरणताया ऐक्यात्तादृशाधिकरणत्वमेव शक्यतावच्छेदक-

मस्तु काले समवायेन व्यापारस्यासत्वेन उक्तदोषस्यावकाशा-भावात्० । न च समवायसंबन्धावच्छिन्नत्वेनाधिकरणतात्वेन च शक्यतावच्छेदकत्वे उक्तगौरवस्य दुर्व्वारता तदवस्थैवेति वाच्यम्, तादृशाधिकरणताव्यक्तेः स्वरूपतः शक्यतावच्छेदकत्व-स्वीकारादिति चेन्न, संबन्धैक्येनाधिकरणत्वस्यैक्यत्वस्वीकारे जलनिष्ठसमवायसंबन्धावच्छिन्ननिरूपकताधिकरणतातो वह्नि-त्वावच्छिन्नसमवायसंबन्धावच्छिन्ननिरूपकताधिकरणत्वस्याभि-न्नतया समवायेन वह्न्यधिकरणतावज्जलं समवायेन जलत्वाधि-करणतावांश्च पर्व्वत इत्यादि प्रतोतेरप्रमात्वस्य दुर्लभत्वप्रसङ्गात् । न च समवायसंबंधावच्छिन्नवह्नित्वावच्छिन्नाधिकरणतात्वाव-च्छिन्नस्वरूपसंबंधावच्छिन्नाधिकरणत्वस्य जले बाधान्नाप्रामा-ण्यस्यानुपपत्तिरिति वाच्यम्,, स्वरूपसंबन्धावच्छिन्नाधिकरण-ताया अनेकत्वविरहेण जलत्वाधिकरणत्ववत्तादृशाधिकरण-त्वाधिकरणत्वस्य जले सत्वात्० । किञ्च,, पर्व्वतीयरूपस्य स-मवायेन पर्व्वते सत्वेन समवायेन पर्व्वतीयरूपाधिकरणत्ववान् पर्व्वत इति प्रतोतिसत्वात्समवायेन वह्न्यधिकरणत्ववान् पर्व्वत इति प्रतोतेः पूर्व्वयुक्त्या प्रामाण्यस्य दुर्व्वारत्वादिति मुक्तलज्ज-या कृतावेव लकाराणां शक्तिरित्येव नवीनवैयाकरणा अपि ब्रूयुः "किञ्च" लः कर्म्मणि च भावे चाकर्म्मकेभ्य इति सूत्रेण कर्त्तरि कृदिति सूत्रस्थकर्त्तृपदाध्याहारात् कृतिविशिष्टसामान्यं लकारा-णां चार्थः प्रतीयत इति कृत्याश्रये शक्तिरित्येवोपगम्यते न तु आश्रये इति कृतित्वजातेः शक्यतावच्छेदकतावच्छेदकत्वेन वैया-करणमते गौरवम्० । न च कर्त्तृत्वं नहि कृतिविशिष्टत्वमपि तु

व्यापाराश्रयत्वं तथा च व्यापारोधातुलभ्यएव आश्रयमात्रं तदर्थ इति आश्रये शक्तिः स्वोक्रियते एतत्सम्यगेवेति आश्रयस्य चैत्रादेश्चैत्रादिपदाल्लाभेऽपि आश्रयत्वेनालाभात् चैत्रपदादेराश्रयस्य लाभे इत्यपि वक्तुमशक्यत्वादिति वाच्यम्. अचेतनस्यापि काष्ठादेः कर्तृत्वप्रसङ्गात्० । न चेष्टापत्तिः रथो गच्छतोति वाक्यदर्शनादिति वाच्यम् । पाककर्तृत्वत्वावच्छिन्नाधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो यो धर्म्मस्तद्वान् पचतीत्याकारकान्वयबोधजनकं यत्किञ्चिद्धर्म्मावच्छिन्नोद्देश्यताकपाककर्तृत्वविधेयकज्ञानं भवत्वित्याकारकजिज्ञासायां प्रयुक्तं कः पचतीति वाक्यं तस्य श्रवणानन्तरं चैत्रः पचति ब्राह्मणः पचतीत्यादिकमेव लोके उत्तरवाक्यं प्रयुङ्क्ते न तु काष्ठं पचतीति० । इदानीं "वैयाकरणनये" भो मित्र तव वतुः शालायां कः पचतीति प्रश्नानन्तरं काष्ठं पचतीत्यपि उत्तरवाक्यं स्यात् । तादृशवाक्यस्यापि उक्तेच्छानिवर्त्तकबोधजनकत्वादिति० । लोके तादृशप्रयोगाभावात् कृतिविशिष्टएवकर्त्ता न तु व्यापारविशिष्टोऽपि ॥ पुनरपि मुक्तलज्जेन कृतिविशिष्टएव कर्तृपदार्थ इति स्वोक्रियताम्० । तथा चोक्तगौरवस्यानुद्धारात्० । न च रथो गच्छतोति वाक्यस्याप्रामाण्यस्य प्रसङ्गः रथस्याचेतनतया गमनानुकूलकृतेस्तत्रासत्वात् इति वाच्यम्, आश्रयत्वे लक्षणास्वीकारादेव तादृशप्रयोगोपपत्तेः ॥ अत एव काष्ठं पचतीति गौणप्रयोगस्यापि प्रामाण्यमुपपद्यते० । "किञ्च" पचतीत्यस्य पाकं करोतीत्येवं विवरणं लोके श्रूयते न तु पाकाश्रयव्यापाराश्रय) इत्यपि तदेवं किं करोति पचतीति प्रश्नोत्तरयोः समानार्थकबोधजनक-

त्वानुरोधेन कृधातोरिव लकाराणां कृतिवाचकत्वं सिद्धम्। न च कृ धातो र्यत्नार्थकत्वे बीजादिनाऽङ्कुरः कृत इत्यादौ अङ्कुरे यत्नाभावात्कथं शाब्दबोध इति वाच्यम्, तत्र कृ धातोरुत्पत्त्याश्रये लक्षणास्वीकारान्न काप्यनुपपत्तिरिति०। 'नव्यास्तु' पचति चैत्र इत्यादिवाक्यजन्यशाब्दबोधे सति यत्नत्वावच्छिन्ने वर्त्तमानत्वसंशयानुदयाद्यत्नविशेष्यकवर्त्तमानत्वप्रकारकान्वयबोधजनकत्वस्य तादृशवाक्ये स्वीकरणीयतया लाघवाद्यत्नत्वजात्यवच्छिन्ने लकाराणां शक्तिं स्वीकर्त्तुमुचितत्वात्०। तत्र शक्तिस्वीकारे तु प्रयोजनाभावेन व्यापाराश्रये शक्तेरस्वीकारादित्याहुः॥ 'यत्तु' पचति चैत्र, इति वाक्यजन्यशाब्दबोधे सति चैत्रः पाकयत्नवान्नवेति संशयाभावस्य सर्व्वानुभवसिद्धस्य कथं वैयाकरणमते निर्व्वाहस्तथाहि पाकानुकूलकृतित्वावच्छिन्नाभावप्रकारकबुद्धिं प्रति अभेदसम्बन्धेन पाकाश्रयप्रकारक-चैत्र-विशेष्यकनिश्चयस्य चैत्राभिन्नाश्रयप्रकारकव्यापारविशेष्यकनिश्चयस्याप्रतिबन्धकत्वात्। इदानीं तादृशसंशयोत्पत्तिर्न्न भवतीति वक्तुमशक्यत्वात्०। इति कृतावेव लकाराणां शक्तिर्न्नत्वाश्रये "तथा च" पाकानुकूलकृतित्वप्रकारकनिश्चयस्य प्रतिबन्धकतया तादृशसंशयाभावस्य तत्र सुघटत्वादिति तत्तुच्छम्॥ एषोनुयोगस्थल एव तथाहि, पचतीति वाक्यजन्यशाब्दबोधे सति चैत्रो व्यापारवान्नवेति संशयाभावस्य व्यापारश्चैत्राभिन्नाश्रयवृत्तिर्न्नवेति संशयाभावस्य वा सर्व्वानुभवसिद्धस्य कथं त्वन्मते निर्व्वाहः। तादृशं प्रति पाकानुकूलकृतित्वावच्छिन्नप्रकारकनिश्चयस्य तुल्ययुक्त्याऽप्रतिबन्धकत्वात्०॥*॥ अथ भवतु कृतावेव शक्तिः "परश्च,

प्रत्ययः तथा चाहन्तास्पदे इन्द्रिये शब्दादिवाह्यक्रिययोद्रिक्ते सति उद्रिक्तस्तद्गताभिमानः प्रकाशशीलसम्भावमुद्रिक्तं करोति । प्रकाशशीलभावस्योद्रेकफलमेव ज्ञानम् । यथाभिमानेनानात्मभाव आत्मसन्निधौ नीयते तथात्मप्रत्ययोऽपि अनात्मभावेन सह सम्बध्यते । अभिमानेनानात्मभावस्य स्वात्मीकरणं प्रवृत्तिस्वरूपम् । तथा च तस्य स्वात्मीकृतभावस्य संस्पृष्टस्यावस्थानं स्थितिस्वरूपम् ॥ २० ॥

उक्तं गुणानां नित्यसाहचर्य्यम् । ते सर्व्वेव परस्परमङ्गाङ्गित्वेन वर्त्तन्ते । तस्मात्त्रिगुणात्मकमन्तःकरणाङ्गत्रयमपि अन्योन्यव्यतिषक्तं परिणमते । यत्रैकं तत्रैव त्रीणि, एकस्मिनुक्ते इतरावध्याहार्य्यौ ॥ २१ ॥

ज्ञाने स्थितिक्रियाभ्यां प्रकाशगुणस्याधिक्याज्ज्ञानं सात्त्विकम् । चेष्टायामुद्रेकस्यैव प्राधान्यं, ततः सा राजसी । स्थित्यां यापरिदृष्टा क्रिया सावरितस्वरूपा, ततः स्थितिस्तामसी । ज्ञानचेष्टास्थितयः प्रख्याप्रवृत्तिस्थितयो वेति त्रयः सत्त्वरजस्तमोगुणान्वयिनः मूलभावा वक्ष्यमाणास्तु प्रमाणादिवृत्तिषु साधारणाः ॥ २२ ॥

चित्तेन्द्रियरूपेण परिणतान्तःकरणमस्मितेत्याख्यायते । यथाहुः—"दृग्दर्शनशक्त्योरेकात्मतेवास्मितेति" । आत्मना सह करणशक्तेः अभिमानकृतैकात्मकतास्मितेत्यर्थः । तथैवाहं श्रोताहं द्रष्टेत्यादिकरणात्मप्रत्ययसम्भवः । तथाचाहुः—"षष्ठश्चाविशेषोऽस्मितामात्र एते सत्तामात्रस्यात्मनः महतः षड़विशेषपरिणामाः" इति । सोऽसौ षष्ठोऽविशेषः चित्तादिकरणोपादानमित्यवगन्तव्यम् ॥ २३ ॥

अस्मिताया द्विविधः परिणामप्रवाहो जात्यन्तरपरिणामकारकः। प्रकाशाभिमुख ऊर्द्ध्वस्रोतो विद्यापरिणामः आवरणाभिमुखोऽर्वाक्स्रोतश्चाविद्यापरिणामः। यत्रान्तरप्रकाशगुणस्योत्कर्षः सात्त्विककरणप्रकृत्यापूरश्च, सा विद्या। यत्र चानात्मभावेन सह सम्बन्धः पुष्कलो भवति, सा अविद्या। यथाहुः—"अर्वाक्स्रोतस इत्येते मग्नास्तमसि तामसाः" इति। तमसि अविद्यायामित्यर्थः। अविद्यया प्रकाशक्रिये रुध्यमाने भवतः॥ २४॥

अविषयीभूतवाह्यसम्पर्कादन्तःकरणस्य त्रिगुणानुसारी त्रिविधः वाह्यकरणपरिणामः प्रजायते। रूपरागादभूच्चक्षुरित्याद्याच स्मृतिः। वाह्यकरणानि यथा प्रकाशप्रधानं ज्ञानेन्द्रियं, क्रियाप्रधानं कर्म्मेन्द्रियं, स्थितिप्रधानः प्राणश्चेति। पञ्च पञ्च ज्ञानेन्द्रियादीनि॥ २५॥

वाह्यकरणार्पितविषययोगादन्तःकरणस्य याः परिणामवृत्तयो जायन्ते, तेषां समष्टिश्चित्तम्। तद्धि वाह्यार्पितविषयोपजीवि चित्तं नियोगकर्त्तृत्वात् प्रधानं वाह्यानां भूपवत् प्रकृतीनाम्। द्वितयी चित्तवृत्तिः शक्तिवृत्तिरवस्थावृत्तिश्चेति। यया चिन्तादयः क्रियन्ते सा शक्तिवृत्तिः। बोधचेष्टास्थितिसहगतचित्तावस्थानविशेषोऽवस्थावृत्तिः॥ २६॥

पञ्चतय्यः शक्तिवृत्तयः प्रमाणानुभवविकल्पचेष्टाधृतय इति। अथ कथं पञ्च भेदाश्चित्तस्य सम्भवन्तीति, उच्यते। त्र्यङ्गमन्तःकरणम्। तस्य परस्परविरुद्धे सात्त्विकतामसकोटी। तस्मादन्तःकरणं परिणम्यमानं पञ्चधा परिणामनिष्ठां प्राप्नोति। तत्राद्यपरिणाम आद्यङ्गबुद्धेरनुगतः प्रकाशाधिकः, मध्यस्त्वभि-

मानप्रधानः क्रियाधिकः, अन्यश्च मनोऽनुगतः स्थितिप्रधानः। आसां परिणामनिष्ठानां मध्ये द्वे परिणामनिष्ठे वर्त्तेयाताम्। तयोरेका आद्यमध्ययोः सम्बन्धभूता, अन्या च मध्यान्त्ययोः सम्बन्धभूता। एवं त्र्यङ्गत्वहेतौ परिणम्यमानादन्तःकरणात् पञ्चविधाः परिणतशक्तयः सम्भवन्तीति। ततस्तु चित्तशक्तेर्वाह्य-करणशक्तीनाञ्च पञ्च पञ्च भेदा अभवन्॥ २७॥

चित्तवृत्तिषु प्रमाणं प्रकाशाधिक्यात् सात्त्विकम्। वाह्य-निश्चयः प्रमाणलक्षणम्। प्रत्यक्षानुमानागमाः प्रमाणानि। ज्ञानेन्द्रियप्रणाडिकया यश्चैत्तिको बोधस्तत् प्रत्यक्षम्। ज्ञाने-न्द्रियमात्रेणालोचनाख्यं ज्ञानं सिध्यति। उक्तञ्च—

"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्व्विकल्पकम्।
बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम्॥
ततः परं पुनर्वस्तु धर्म्मैर्जात्यादिभिर्यया।
बुद्ध्यावसीयते सा हि प्रत्यक्षत्वेन सम्मता॥" इति।

आलोचनं हि एकेनैवेन्द्रियेणैकदा गृह्यमाणविषयख्यात्या-त्मकम्। तदनन्तरभूतं जातिधर्म्मादिविशिष्टं ज्ञानं चैत्तिक-प्रत्यक्षम्। यथा वृक्षदर्शने अक्ष्णा हरिद्वर्णाकारविशेषमात्रं गृह्यते; उत्तरक्षणे च छायाप्रदत्वादिगुणान्वितो न्यग्रोधवृक्षो-ऽयमिति यज्ज्ञानं भवति तदेव चैत्तिकप्रत्यक्षमिति॥ २८॥

असहभावि-सहभावि-सम्बन्धपूर्व्वकमप्रत्यक्ष-पदार्थ-ज्ञान-मनु-मानम्। अत्रापि प्रमेयो वाह्यत्वेन निश्चीयते। आप्तवचनाच्छ्रोतु-र्योऽविचारसिद्धो निश्चयः स आगमः। यद्वाक्यवाहितशक्ति-विशेषादभिभूतविवेकस्य श्रोतुस्तद्वाक्यार्थनिश्चयो भवति स तस्य श्रोतुराप्तः। पाठजनिश्चयो नागमप्रमाणम्। अनुमानजः

शब्दार्थस्मरणजो वा तत्र निश्चयः। आगमप्रमाणे तु स्वबोध-संक्रान्तिकामस्य श्रोतृविवेकाभिभवकृच्छक्तिवतो वक्तुः श्रोतुश्च साधकत्वेन सद्भावोऽङ्गीकार्यः। यथाहुः—"आप्तेन दृष्टोऽनुमितो वार्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः"इति। तस्मात्प्रत्यक्षानुमानविलक्षणं प्रमायाः करणम् आगम इति सिद्धम् ॥ २९ ॥

प्रत्यक्षजं विशेषज्ञानम्। मूर्त्तिर्गृह्यमाणव्यवधिधर्म्मयुक्तः विशेषः। घटादीनां स्वविशेषशब्दस्पर्शरूपादयो मूर्त्तिः। व्यवधिराकारः। अनुमानागमाभ्यां सामान्यज्ञानम्। तद्धि सत्तामात्रनिश्चयः। ज्ञातमूर्त्त्यादिधर्म्मैः सा सत्ता विशिष्यते। प्रत्यक्षं सात्त्विकं सद्विषयत्वात्। अनुमानं प्रयत्नविशेषसाध्यत्वाद्राजसिकम्। तथा चाभिभवसिद्धत्वादागमस्तामस इति ॥ ३० ॥

करणगतभावबोधोऽनुभवः। यथा गीते ध्वनिज्ञानं प्रत्यक्षं प्रमाणं, सुखबोधस्त्वनुभवः। शब्दादिविषयकं प्रत्यक्षं ; शब्दादिग्रहणकाले ग्रहणात्मकक्रियायाः करणगताया अपि योऽन्तर्बोधः सोऽनुभव इत्येतस्य प्रत्यक्षतो भेदः। किञ्चानुभवस्य वाह्यकारणपरम्पराजन्यत्वेऽपि न तद्विषयस्य स्फुटो वाह्याभिविधिः प्रत्यक्षवदिति। तथा च गृह्यमाणविषयत्वादनुभवोऽगृह्यमाणविषयाभ्यामनुमानागमाभ्यां भिद्यते। अनुभवोऽपि गुणानुसारतस्त्रिविधो यथा बोधसहगतश्चेष्टासहगतः स्थितिसहगतश्चेति। ते चापि वाह्याभ्यन्तरभेदाद्द्विविधाः। त्रिविधवाह्यकरणगतभावबोधः वाह्यानुभवः, चित्तगतभावबोधः आन्तरः। बोधसहगतानुभवो यथा ज्ञातविषयस्मृतिरिति, शब्दादिजसुखादयश्चेति। चेष्टासहगतो यथा चेष्टास्मृतिरिति, कर्म्मानुभव इति, कर्म्मेन्द्रिय-

गतकर्म्मसहायः सुखादिकर उपश्लेषबोधस्त्वग्गतः शीतोष्णज्ञान-विलक्षणः कर्म्मेन्द्रियाङ्गभूत इति च। स्थितिसहगतानुभवो यथा निद्रादीनां स्मृतिः, यथा वा प्राणप्रणालिकः क्लान्तिपीड़ाद्यः शारीरानुभवः। "अनुभूतविषयासम्प्रमोषः स्मृति"रिति सूत्रात् प्रमाणादिगृहीतविषयस्य धृतिवृत्त्या विधृतस्य चित्तगतस्य बोधः स्मृत्याख्यानुभव इत्येवावगम्यते। तस्मादनुभवः करणगत-भावबोधः इति सिद्धम्। प्रमाणात् प्रकाशाल्पत्वात् तस्माच्च ऊहनादिप्रयत्नबाहुल्यसाध्यत्वादनुभवस्य द्वितीये सात्त्विकराजस-वर्गेऽन्तर्भावः॥ २१॥

तृतीया शक्तिवृत्तिश्चेष्टा राजसी क्रियाबहुला, तस्याः सङ्कल्प-कल्पनावधानानीति त्रयो भेदास्त्रिगुणानुसारिणः। तत्र चेतस्यनु-भाव्यमानक्रियायामभिमानप्रयोगः सङ्कल्पस्वरूपम्। यथा गमिष्यामीत्यत्र गमनक्रियाऽनागता, तदनुभावपूर्व्वकं तद्वत आत्मनो भावनं सङ्कल्पस्वरूपम्। गमिष्याम्यनागतगमनक्रियावान् भविष्यामीत्यर्थः। क्रियानुस्मृत्या सहात्मसम्बन्धोऽभिमानकृतः।

या चित्तचेष्टाहितविषयानितरेतरेष्वारोपयति तत् कल्पनम्। यथाऽदृष्टहिमगिरिकल्पनम्। चित्ताहितपर्व्वततुहिनानुस्मृतिपूर्व्वकं पर्व्वताग्रे तुहिनमारोप्य हिमाद्रिः कल्प्यते।

यया च चित्तचेष्टयेन्द्रियादिवृत्तौ चित्तावधानं क्रियते साव-धानचेष्टा। गमिष्यामीति मनोरथमात्रेणैव न गमनं भवति; तत्सङ्कल्पानन्तरं यया चित्तचेष्टया पादौ चलौ क्रियेते तत् कर्म्मावधानम्। तथा ज्ञानावधानं, प्राणावधानं, तथा चोहनाख्या स्मृतिहेतुचेष्टा। ज्ञानसन्निकृष्टहेतोः प्राधान्याच्च सङ्कल्पश्चेष्टासु सात्त्विकः। कल्पनं राजसं, चाञ्चल्यबाहुल्यात्। अवधानञ्च

तामसमपरिदृष्टत्वात् । सङ्कल्पवत् कल्पनावधाने अपि अभिमान-प्रधान-चलनात्मके । सङ्कल्पः कर्म्म मानसमिति स्मृतेः सङ्कल्पादि-वृत्तीनां क्रियाबहुलता ततश्च चेष्टान्तर्गतत्वमवगम्यत इति ॥३२॥

चेष्टायामभिमानोद्रेकस्यावकटप्रवाहः। यतोऽसावन्तः प्रजायते ततस्तु वहिः कर्म्मेन्द्रियादावागच्छति। बोधे चान्तःप्रवाहाभिमानोद्रेकः विषयस्य वाह्यत्वात् ॥ ३३ ॥

चतुर्थवृत्तिर्विकल्पस्तल्लक्षणं यथाहुः—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति । "वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्य-निबन्धनो व्यवहारो दृश्यते।" वास्तवार्थशून्यवाक्यस्य यज्ज्ञानं तदनुपातिनी या चित्तपरिणतिर्जायते स विकल्पः । भाषायां विकल्पवृत्तेरुपकारिता। त्रिविधो विकल्पो यथा सात्त्विको वस्तुविकल्पः, राजसः क्रियाविकल्प-स्तामसश्चाभावविकल्पः । आद्यस्योदाहरणं यथा, "चैतन्यं पुरुषस्य स्वरूप"मिति, "राहोः शिर" इति च। अत्र वस्तुनोरेकत्वेऽपि व्यवहारार्थं तयोर्भेद-वचनं वैकल्पिकम्। अकर्त्ता यत्र व्यवहारसिद्धर्थं कर्त्तृवत् व्यवह्रियते स क्रियाविकल्पः। यथा, "तिष्ठति वाणः," ष्ठा गति-निवृत्ताविति धात्वर्थः गतिनिवृत्तिक्रियायाः कर्त्तृरूपेण वाणो व्यवह्रियते, वस्तुतस्तु वाणे नास्ति तत् क्रियाकर्त्तृत्वमिति। अभावार्थपदाश्रिता चित्तवृत्तिरभावविकल्पः। यथा, "अनुत्पत्तिधर्म्मा पुरुष" इति। "उत्पत्तिधर्म्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्म्मस्तस्मात् विकल्पितः स धर्म्मस्तेन चास्ति व्यवहार" इति।

वैकल्पिकौ नित्यव्यवहार्य्यौ दिक्कालौ। यथाहुः—"स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्म्माणः शब्दज्ञानानुपाती लौकिकानां

व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासत” इति । भूतभाविनौ कालौ शब्दमात्रौ अवर्त्तमानपदार्थौ । तथाच रूपादिधर्म्म-शून्यः न कश्चिदवकाशाख्यो वाह्यः प्रमेयो भावपदार्थोऽवशिष्यते, रूपादिशून्यस्य वाह्यस्याकल्पनीयत्वात् । तस्मात् सांख्यनये दिक्कालौ वैकल्पिकत्वेन सम्मतौ । अवास्तवत्वेऽपि वैकल्पिक-विषयस्य सिद्धवदसौ व्यवह्रियते । वक्ष्यमाणधृतिवृत्तितुलनया प्रकाशाधिक्यात् विकल्पस्य चतुर्थे राजसतामसवर्गेऽन्तर्भावः॥२४॥

पञ्चमी शक्तिवृत्तिर्धृतिः । ग्रहणधारणोहापहेत्यादिवाक्यात् धारणवृत्तेर्मौलिकत्वमवगम्यते । यया वाह्येन्द्रियार्पितविषयाः चेतस्याहितास्तिष्ठन्ति सा धारणवृत्तिः । अस्ति सर्व्वबोधस्य बोध्यविषयः, स्मरणबोधस्याप्यस्ति विषयः, न स वहि-र्विद्यते, तस्मादन्तर एवास्ति स्मर्थ्यविषय इत्यनुमीयते । ययासौ विषय अन्तरे विधृतस्तिष्ठति, सा धारणवृत्तिः । चित्तस्य वाह्य-करणार्पितविषयोपजीवित्वात् विषयाधानपरा चित्तस्य धृति-वृत्तिः मनस्तु करणशक्तिधारणपरा शक्तिरिति विवेच्यम् । सर्व्वे तु आहितभावाः संस्कार इत्यभिधीयन्ते । त्रिविधा चित्तस्य धारणवृत्तिः, सात्त्विकी बोध्यधृतिः राजसी चेष्टाधृतिस्तामसी रुद्धभावधृतिरिति । तत्राद्या वुद्धविषयाधानं, सर्व्वचेष्टाधानं मध्या, अन्त्या च निद्रादिरुद्धभावसंस्कारः । धृतिवृत्त्याहित-विषयाणामपरिदृष्टभावेन चेतस्यवस्थानात् तस्याः स्थितिस्वरूप-त्वाच्च धृतिवृत्तिः पञ्चमी तामसवर्गीयेति ॥ २५ ॥

सुखाद्या नवधा चित्तस्यावस्थावृत्तयः सर्व्ववृत्तिसाधारण्यः । तासां तिस्रो बोध्यगतास्तिस्रश्चेष्टागतास्तिस्रश्च धार्य्यगताः । शक्तिवृत्तिवदवस्थावृत्तिभिश्चित्तस्य न ज्ञानादिक्रियासिद्धिः ।

ज्ञानादिक्रियाकाले चित्तस्य यद्यद्भावेनावस्थानम्भवति ता एवावस्थावृत्तयः ॥ ३६ ॥

तत्र सुखदुःखमोहाः सत्त्वरजस्तमःप्रधाना बोध्यगता अवस्थावृत्तयः । सर्व्वे बोधाः सुखावहा वा दुःखावहा वा मोहावहाः समुत्पद्यन्ते । अनुकूलविषयकृतोद्रेकात् सुखं, प्रतिकूलविषयाच्च दुःखम् । मोहः पुनः सुखस्य दुःखस्य वातिभोगात् सुखदुःखविवेकशून्योऽनिष्टो जड़भावः, यथा भयम् ॥ ३७ ॥

रागद्वेषाभिनिवेशाश्चेष्टागतावस्थावृत्तयस्त्रिगुणानुसारिण्यः । रक्तं द्विष्टं वाभिनिविष्टं हि चित्तं चेष्टते । सुखानुशयी रागः, दुःखानुशयी द्वेषः, स्वरसवाहिनी तथारूढ़ा चेष्टावस्थाभिनिवेशः । न मरणत्रासमात्रमभिनिवेशः । तथारूढ़ायाः प्राणादिवृत्तिरूपाया अभिनिविष्टचेष्टाया नाशाशङ्कैव मरणभयाख्येति विवेच्यमिति ॥ ३८ ॥

जाग्रत्स्वप्नसुषुप्तयो धार्य्यगतावस्थावृत्तयः । धार्य्यं शरीरं, तत्सम्पर्काद्धार्य्यगतावस्थावृत्तयश्चित्तस्य । जाग्रदवस्था सात्त्विकी, स्वप्नावस्था राजसी, निद्रावस्था तामसी । तथाच शास्त्रम्—

"सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् ।
प्रस्वापनं तु तमसा, तुरीयं त्रिषु सन्ततम् ॥" इति ।

जागरे चित्तेन्द्रियाधिष्ठानान्यजड़ानि चेष्टन्ते । जाड्यतापन्नेषु ज्ञानकर्म्मेन्द्रियेषु तदनियतस्य अनुव्यवसायाधिष्ठानस्य यदा चेष्टा तदवस्था स्वप्नः । उत्स्वप्ने तु अजाड्यता कर्म्मेन्द्रियाधिष्ठानानाम् । सुषुप्तिलक्षणं यथाहुः—"अभावप्रत्ययालम्बना वृत्तिर्निद्रे"ति । तदा चित्तेन्द्रियाधिष्ठानानां सम्यग्जाड्यत्वम् । उक्तञ्च—"सुषुप्तिकाले सकले विलीने

तमोऽभिभूतः सुखरूपमेति ।" इति ।

गुणानामभिभाव्याभिभावकस्वभावादवस्थावृत्तीनामस्थेमावर्त्तनञ्चेति ॥ ३९ ॥

त्रिविधश्चित्तव्यवसायः। सद्व्यवसायोऽनुव्यवसायोऽपरिदृष्टव्यवसायश्चेति। कतिपयशक्ती अधिकृत्यैकदैव यच्चित्तचेष्टितं स व्यवसायः। सद्व्यवसायो ग्रहणमनुव्यवसायश्चिन्तनमपरिदृष्टव्यवसायो धारणम्। ज्ञानेन्द्रियादीनधिकृत्य वर्त्तमानविषयो व्यवसायः सदाख्यः। अतीतानागतविषयोऽनुव्यवसायः स्मृतविषयालोड़नात्मकः। येन चाविद्यमानेन व्यवसायेन निद्रादावपि सदा चित्तपरिणामो जायते, संस्काराश्च येनानुजीवन्ति, सोऽपरिदृष्टव्यवसायः। यथाहुः—

"निरोधधर्म्मसंस्काराः परिणामोऽथ जीवनम्।
चेष्टा शक्तिश्च चित्तस्य धर्म्मा दर्शनवर्ज्जिताः॥" इति।

निरोधः समाधिविशेषः, धर्म्मसंस्कारा आहितभावाः, परिणामोऽपरिदृष्टव्यवसायः, जीवनं प्राणाः कार्य्यकारणयोरभेदविवक्षया जीवनं स्वकारणस्यान्तःकरणस्य धर्म्मत्वेनोक्तं, चेष्टा अवधानरूपा, शक्तिश्चेष्टाजननी, सर्व्वशक्त्यात्मकं तृतीयान्तःकरणं मन इति भावः। इत्येते सर्व्वे भावास्तामसा इति ज्ञेयाः॥ ४० ॥

व्याकृतमाभ्यन्तरकरणम्, वाह्यकरणान्यधुनोच्यन्ते। तेषु कर्णत्वक्चक्षूरसनानासा इति ज्ञानेन्द्रियाणि। एतानि प्रणालीभूतानि प्रत्यक्षवृत्तेः। क्रियात्मनः वाह्यविषयस्य सम्पर्कादुद्रिक्तायामिन्द्रियात्मास्मितायां तत्सम्बन्धिना प्रकाशशीलेनास्मिप्रत्ययात्मकेन ज्ञात्रा यो विषयप्रकाशः क्रियते तदिन्द्रियजं ज्ञानम्। तस्माद्बुद्धीन्द्रियं ग्राहकं वाहकञ्च क्रियात्मनो ज्ञेयविषयस्य॥ ४१ ॥

शब्दग्राहकं श्रोत्रम्। शीतोष्णमात्रग्राहकं त्वग्वृत्तिज्ञानेन्द्रियं त्वगाख्यम्। न च त्वक्स्थोपश्लेषबोधः त्वगाख्यज्ञानेन्द्रियकार्य्यम्, शीतादेराश्लेषबोधस्य च विसदृशत्वात्। शब्दरूपवत् शीतोष्णज्ञानसिद्धिः न तथाश्लेषबोधसिद्धिः। रूपग्राहकं चक्षुः, रसग्राहकं रसनेन्द्रियं, नासा च गन्धग्राहिणी। श्रोत्रे इतरतुलनया ग्रहणस्य पौष्कल्यमव्याहतत्वञ्च ततस्तत् सात्त्विकम्। शब्दात्तापादेर्व्याहतत्वदर्शनात्त्वगिन्द्रियं सात्त्विकराजसम्। त्वग्विषयादपि रूपस्य व्याहतियोग्यत्वदर्शनात् तथा च तस्याशुसञ्चाराद्राजसं चक्षुः। रस्यं तरलितं सद्रसनेन्द्रियं भावयति, तद्भावनाविशेषोद्रेकाद्रसज्ञानसिद्धिः। सूक्ष्मचूर्णव्यतिषङ्गाद्गन्धज्ञानोद्रेकः। रसगन्धौ आद्यत्रयादावृतौ। तत्र सूक्ष्मतरभावनाविशेषसाध्यत्वाद्रसना राजसतामसी, नासा पुनस्तामसीति। ज्ञानेन्द्रियविषयः प्रकाश्यमित्याख्यायते॥ ४२॥

वाक्पाणिपादपायूपस्थाः कर्म्मेन्द्रियाणि। तेषां सामान्यविषयः स्वेच्छाचालनम्। प्रत्यङ्गानां समञ्जसचालनेन कार्य्यविषयसिद्धिः। ध्वन्युत्पादनं वाक्कार्य्यम्। शिल्पशक्तिर्यत्राधिष्ठिता स पाणिः। व्यवहार्य्यद्रव्याणां तदवयवानां वाभीष्टदेशस्थापनं शिल्पम्। गमनक्रियाशक्तिर्यत्राधिष्ठिता तत् पदम्। मलमूत्रोत्सर्गः पायुकार्य्यम्। जननव्यापार उपस्थकार्य्यम्। वीजसेकप्रसवौ जननव्यापारौ। सर्व्वेषु चालनविषयसाम्यात् एकस्य कर्म्मेन्द्रियस्य कार्य्यविषयः अन्येनापि सिध्यति। यत्र यत्कार्य्यस्योत्कर्षः तदेव तदिन्द्रियम्। उरसि श्वासयन्त्रस्य स्वेच्छाधीनांशे तन्तुषु च जिह्वोष्ठादौ च वागिन्द्रियस्थानम्। "जिह्वाया अधस्तात्तन्तु"रित्युपदेशात् तन्तुः कण्ठाग्रस्थो ध्वन्यु-

त्पादकः। करवदनचञ्च्वादौ पाणिस्थानम्। पदपक्षादौ पादेन्द्रियस्थानम्। वस्त्यादौ पायुस्थानं, जननेन्द्रिये चोपस्थवृत्तिः। वाक्कार्य्यस्य सूक्ष्मत्वादुत्कर्षत्वाच्च वाक् सात्त्विकी। ततः स्थौल्यं सात्त्विकराजसस्य पाणिः कार्य्यस्य। पदे क्रियाया आधिक्यमतिस्थौल्यञ्चेति पदं राजसम्। राजसतामसः पायुः। उपस्थश्च तामसः। सर्व्वेषु कर्म्मेन्द्रियेष्वाश्लेषबोधाख्यः प्रकाशगुणस्तेषां चालनरूपमुख्यकार्य्यस्योपसर्ज्जनीभूतो वर्त्तते। तस्य चाश्लेषबोधस्य वागिन्द्रिये अत्युत्कर्षः, यत्सहाया सूक्ष्मा वाक्यक्रिया सिध्यति। इतरेषु च तद्बोधस्य क्रमशः अल्पाल्पत्वमिति ॥ ४२ ॥

तृतीयं वाह्यकरणं प्राणाः।

"जीवस्य करणान्याहुः प्राणान् हि तांस्तु सर्व्वशः।
यस्मात्तद्वशगा एते दृश्यन्ते सर्व्वजन्तुषु ॥"

इति सौत्रायणश्रुतौ प्राणानां जीवकरणत्वमुक्तम्। प्राणा देहात्मकधार्य्यविषयत्वेन वाह्यं भौतिकं व्यवहरन्ति, तस्मात् प्राणा वाह्यकरणम्। "अहं पञ्चधात्मानं विभज्यैतद्वाणमवष्टभ्य विधारयामीति," "प्राणश्च विधारयितव्य"ञ्चेति श्रुतिभ्यां देहधारणं प्राणानां सामान्यकार्य्यमित्यवगम्यते। निर्म्माणवर्द्धनपोषणानीत्येषां धारणकार्य्येऽन्तर्भावः। तथाच स्मृतिः—

"तथा मांसञ्च मेदश्च स्नायुस्थीनि च पोषति।
कथमेतानि सर्व्वाणि शरीराणि शरीरिणाम्।
वर्द्धन्ते वर्द्धमानस्य वर्द्धते च तथा बलम् ॥" इति।

पोषणं शरीरनिर्म्माणं वर्द्धनञ्चेति त्रयं मूलं प्राणकार्य्यमित्यर्थः। पोषणादीनामनुकूलक्रिया अपि प्राणकार्य्यमिति

ज्ञेयम्, यथा श्वासादि। चित्तेन्द्रियवत् सन्ति प्राणानामपि पञ्च भेदाः। ते यथा प्राणोदानव्यानापानसमाना इति। ताभ्य एव पञ्चभ्यः शक्तिभ्यो देहधारणसिद्धिः ॥ ४४ ॥

तत्र "वाह्यशोद्भवबोधाधिष्ठानधारणं प्राणकार्य्यम्"। "चक्षुः-श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते," "ह्येनं चाक्षुषं प्राणमनुरुत्क्रान्तः" इत्यादिभ्यश्च श्रुतिभ्यः, तथाच—

"मनो बुद्धिरहङ्कारो भूतानि विषयाश्च सः।
एवं त्विह स सर्व्वत्र प्राणेन परिचाल्यते ॥"

इत्यादिस्मृतिभ्यश्च ज्ञानेन्द्रियादिगतवाह्योद्भवविषयविज्ञानस्रोतःसु प्राणवृत्तिरित्यवगम्यते। चत्वारः खलु वाह्योद्भवबोधाः। ते यथा चैत्तिकप्रमाणं, बुद्धीन्द्रियसाध्यालोचनं ज्ञानं, कर्म्मेन्द्रियस्योपश्लेषबोधः, तथा चाजिहीर्षाबोधः इति। वातपेयान्नरूपस्याहार्य्यस्य त्रैविध्यात् त्रिविध आजिहीर्षाबोधः, श्वासेच्छाबोधः पिपासा च क्षुधा चेति। आहार्य्यस्य वाह्यत्वादाजिहीर्षाबोधः वाह्योद्भवः। तत्र श्वासेच्छादिबोधाधिष्ठाने प्राणस्य मुख्यवृत्तिः। यथाम्नायः—"प्राणो हृदयं," "हृदि प्राणः प्रतिष्ठितः," "प्राणो अत्ता" इत्यादि। उक्तञ्च—

"आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यगे।
प्राणालय इति प्रोक्तः ॥" इति।

नाभिमध्यगे क्षुद्बोधाधिष्ठान इत्यर्थः। चित्तेन्द्रियशक्तिवशगः प्राणस्तेषां वाह्योद्भवबोधाधिष्ठानांशं निर्म्मिमीते ॥ ४५ ॥

शारीरधातुगतबोधाधिष्ठानधारणमुदानकार्य्यम्। "पुण्येन पुण्यं लोकं नयति, पापेन पाप"मिति श्रुतेः "उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्चे"ति योगसूत्रात् "उदान उत्-

क्रान्तिहेतु"रिति वचनाच्च अपनीयमानादुदानान्मरणव्यापार-शेष इति प्राप्तम्। मरणकाले आदौ वाह्यबोधचेष्टानिवृत्तिः। उक्तञ्च—"मरणकाले क्षीणेन्द्रियवृत्तिः सन् मुख्यया प्राणवृत्त्याव-तिष्ठते"। तदा शारीरधातुगतबोध एवावशिष्यते, यस्य भागशः शरीराङ्गत्यागान्मृतिः। तस्मादुदानः शारीरधातुगतबोधः। स्मर्य्यते च—"शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्म्मसु" इति। मर्म्मसु शारीरधातुगतबोधाधिष्ठानेष्वित्यर्थः। "अथैकयोर्द्ध्व उदानः" इत्यादिश्रुतिभ्यः "सुषुम्ना चोर्द्ध्वगामिनी"ति, "ज्ञाननाड़ी भवेद्देवि योगिनां सिद्धिदायिनी" चेति शास्त्राभ्यामूर्द्ध्वस्रोतस्विन्यां सुषुम्नानाड्यां मेरुदण्डमध्यगतायामान्तरबोधस्य मुख्यस्रोतो-भूतायामुदानस्य मुख्या वृत्तिः, सर्व्वत्र तु सामान्यवृत्तिरिति। उक्तञ्च—"तयैकयोर्द्ध्वः सन्नुदानो वायुरापादतलमस्तकवृत्ति-"रिति। चित्तेन्द्रियशक्तिवशगा उदानशक्तिस्तेषां धातुगतबोधा-धिष्ठानांशं विशियते ॥ ४६ ॥

चालनशक्त्यधिष्ठानधारणं व्यानकार्य्यम्। "अथ यान्यन्यानि वीर्य्यवन्ति कर्म्माणि यथाग्नेर्मथनमाजेः सरणं दृढ़स्य धनुषः आय-मन"मिति, "यो व्यानः सा वाक्" इत्यादिश्रुतिभ्यः स्वेच्छाचालन-शक्त्यधिष्ठानधारणं व्यानकार्य्यमिति गम्यते। "अत्रैतदेकशतं नाड़ीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखा-नाड़ीसहस्राणि भवन्त्यासु व्यानश्चरती"ति श्रुतेः हृदयात्प्रस्थितासु नाड़ीषु व्यानवृत्तिरित्यपि च गम्यते। ता हि हृन्मूला नाड्यो रसरक्तादीन् सञ्चालयन्ति। तथाच स्मृतिः—

"प्रस्थिता हृदयात् सर्व्वाः तिर्य्यगूर्द्ध्वमधस्तथा।
वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः॥" इति।

अतः स्वेच्छासञ्चालके स्वतःसञ्चालके च शरीरांशे व्यानवृत्तिरिति सिद्धम् । एतयोरन्त्ये च तस्य मुख्यवृत्तिः । इतरकरणशक्तिवशगेन व्यानेन तत्तत्सञ्चालकांशः विध्रियत इति ॥ ४७ ॥

मलापनयनशक्त्यधिष्ठानधारणमपानकार्य्यम् । "निरोजसां निर्गमनं मलानाञ्च पृथक् पृथ"गिति स्मृतेरोजोहीनानां सर्व्वधातुगतमलानां पृथक्करणमेवापानकार्य्यम् । ननु विण्मूत्रोत्सर्गस्तत्कार्य्यं, तस्य पायुकार्य्यत्वात् । "पायूपस्थेऽपान"मिति श्रुतेः मूत्रादिमलपृथक्कारके शरीरांशे पाय्वादौ तस्य मुख्यवृत्तिः, सर्व्वगात्रेषु च सामान्यवृत्तिरिति ॥ ४८ ॥

देहोपादाननिर्म्माणशक्त्यधिष्ठानधारणं समानकार्य्यम् । तथा च श्रुतिः—"एष ह्येतद्धुतमन्नं समन्नयति तस्मादेताः सप्तार्च्चिषो भवन्ती"ति, "यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति स समान" इति च । अतः त्रिविधाहार्य्यस्य देहोपादानत्वेन परिणामनं समानकार्य्यमिति सिद्धम् । उक्तञ्च—

"पीतं भक्षितमाघ्रातं रक्तपित्तकफानिलात् ।
समं नयति गात्राणि समानो नाम मारुतः ॥" इति ।

"मध्ये तु समान" इति श्रुतेर्नाभिदेशस्थे आमाशयपक्वाशयादौ मुख्या समानवृत्तिः । सर्व्वगात्रेषु च तस्य सामान्यवृत्तिरिति । यथोक्तं योगार्णवे—"सर्व्वगात्रे व्यवस्थित"मिति ॥ ४९ ॥

वाह्योद्भवबोधाधिष्ठानं धातुगतबोधाधिष्ठानं चालकशक्त्यधिष्ठानं मलापनयनशक्त्यधिष्ठानं देहोपादाननिर्म्माणशक्त्यधिष्ठानञ्चेति पञ्चैतेषामधिष्ठानानां सङ्घातः शरीरम् । एभ्योऽतिरिक्तः नास्त्यन्यः शरीरांशः । प्रकाशाधिक्यात् प्राणः सात्त्विकः, आवृततरत्वादुदानः सात्त्विकराजसः, क्रियाधिक्याद्व्यानः राजसः,

अपानः राजसतामसः, स्थित्याधिक्यात् समानश्च तामसः॥ ५० ॥

ज्ञानकर्म्मेन्द्रियवत् प्राणा अप्यस्मितात्मकाः। श्रुतिश्चात्र—"आत्मन एष प्राणो जायत" इति। अपरिणामित्वाच्चिदात्मनः। आत्मनोऽस्मिताया इत्यर्थः।

"सत्त्वात् समानो व्यानश्च इति यज्ञविदो विदुः।
प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः॥"

इति स्मृतिरप्यन्तःकरणात्प्राणोत्पत्तिः सिद्धा। तथाच सांख्यानुशिष्टिः—"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चे"ति। अन्तःकरणत्रयाणां प्राणो वृत्तिः परिणाम इति भावः॥ ५१ ॥

बाह्यकरणानां ज्ञानेन्द्रियेषु प्रकाशगुणस्याधिक्यं क्रियास्थित्योश्चाप्राधान्यं, ततः सात्त्विकं ज्ञानेन्द्रियम्। कर्म्मेन्द्रियेषु क्रियागुणस्य प्राधान्यं प्रकाशस्थित्योरल्पता, ततः राजसं कर्म्मेन्द्रियम्। प्राणेषु च स्थितिगुणस्य प्राधान्यं प्रकाशगुणस्यास्फुटता तथा स्वेच्छानधीनत्वात् कर्म्मेन्द्रियेभ्यः क्रियागुणस्याप्यपकर्षस्तस्मात् प्राणास्तामसाः॥ ५२ ॥

आबुद्धि समानान्तानि करणानि। ग्राह्याश्रितास्तेषां विषयाः। ग्रहणेन ग्राह्यो यथा व्यवह्रियते, स विषयः। ग्राह्यग्रहणयोर्व्यतिषङ्गफलं विषयः। ग्राह्यो विषयद्वारेण गृह्यते, तस्माद्विषयः सम्पर्कफलोऽपि ग्राह्याश्रित इवावभासते। यथा शब्दविषयः ग्राह्याश्रित इव प्रतीयते, वस्तुतस्तु नास्ति ग्राह्यद्रव्ये शब्दः, तत्र घातजन्यो वेपथुरेवास्ति। विषया ग्राह्याश्रितधर्म्मरूपेण ग्राह्याश्च धर्म्माश्रयरूपेण व्यवह्रियन्ते। तस्मान्नास्ति ग्राह्यस्य वास्तवमूलस्वरूपसाक्षात्कारोपायः। गौणेनानुमानादिहेतुना तत्स्वरूपमवगम्यते। विषयास्तु साक्षात्कृतस्वरूपाः।

करणप्रसादविशेषात् विषयस्यैव सूक्ष्मावस्था साक्षात्क्रियते न मूलग्राह्यमिति ॥ ५३ ॥

वाह्यधर्म्माश्रयो ग्राह्योऽधुना विचार्य्यते। बोध्यत्वं क्रियात्वं जाड्यत्वञ्चेति ग्राह्यधर्म्माः। तत्र सविशेषाः शब्दस्पर्शरूपरसगन्धा इति पञ्च प्रकाश्यधर्म्माः, अन्ये च बोध्यविषयाः ग्राह्याश्रितबोध्यत्व-धर्म्माः। देशान्तरगतिर्वाह्यस्य क्रियात्वधर्म्मलक्षणम्। कर्म्मे-न्द्रियैः शरीरं सञ्चाल्य तथा प्रकाश्यविषयपरिणतिं देशान्तरगति-ञ्चावलोक्य क्रियात्वधर्म्मा उपलभ्यन्ते। क्रियारोधका जाड्यत्व-धर्म्माः। शारीरबाधां बुद्ध्वा तथा जाड्यत्वापगमात्मके शरीरचालने कर्म्मशक्तिव्ययञ्च बुद्ध्वा, तथाच प्रकाश्यविषयावरणमवलोक्य जाड्यत्वधर्म्मा अवगम्यन्ते। कठिनता-तरलता-रश्मिता-वाय-वीयतादयः जाड्यत्वमूला बोधाः ॥ ५४ ॥

प्रत्येकं वाह्यद्रव्येषु बोध्यत्वक्रियात्वजाड्यत्वधर्म्माणां कति-पयविशेषधर्म्मा वर्त्तन्ते। तादृंशि त्रिविशेषधर्म्माश्रयद्रव्याणि भौतिकमित्युच्यन्ते। यथा घटपटधातुपाषाणादयः। क्रियात्व-जाड्यत्वयोरपि बोध्यत्वात् तयोर्बोध्यत्वधर्म्मे उपसर्ज्जनीभावः। द्विष्टो हि वाह्यबोध्यत्वधर्म्मः, प्रकाश्यविषयो वाह्योऽन्नवानुभाव्य-विषयस्चेति। तत्र प्रकाश्यधर्म्माणामेव वाह्याभिविधिः विस्तार-युक्तः वाह्यवस्तुप्रतीतिरूपः। वाह्यजन्यत्वेऽपि नानुभाव्यविषयस्य सुखकरत्वादेः वाह्याभिविधिः। तस्मात् सर्व्वबोध्यत्वक्रियात्व-जाड्यत्वधर्म्मेषु पुरोवर्त्तिनः प्रकाश्यधर्म्माः। तान् पुरस्कृत्यान्ये उपलभ्यन्ते। तस्मात् प्रकाश्यधर्म्मानुसारत एव स्थूलविषयान् सूक्ष्मविषयेषु विभज्य साक्षात्करणीयम्। प्रत्यक्षविषयाणां प्रकाश्यधर्म्माणां शब्दस्पर्शरूपरसगन्धा इति पञ्च भेदाः। तस्मात्

पञ्च एव तत्तद्धर्म्माश्रयाणि साक्षात्कारयोग्यानि भौतिकोपादानानि भूताख्यद्रव्याणि। क्रियात्वजाड्यत्वे परिणामरुद्धतारूपाभ्यां सामान्यतः भूतेषु समन्वागते ॥ ५५ ॥

आकाशवायुतेजोऽप्क्षितयो भूतानि। तत्र शब्दमयं जड़परिणामिद्रव्यमाकाशम्। तथा स्पर्शादिमया यथाक्रमं वाय्वादयः। प्रकाश्यधर्म्ममूलविभागत्वान्न भूतानि हस्तादिभिः पृथक्करणीयानि। हस्तादिभिर्विभक्तस्य भौतिकस्य भौतिकान्तरेषु अतत्त्वानुसारी विभागः स्यात्। निरुद्धापरेषु एकैकेन ज्ञानेन्द्रियेण भूतानि पृथगुपलभ्यन्ते। वितर्कानुगतसमाधौ निरुद्धेषु त्वगादिषु अनिरुद्धेन श्रोत्रमात्रेण यद्बाह्यं शब्दमयं वस्त्वस्तीति प्रत्यक्षीक्रियते तदाकाशस्वरूपम्। एतेन वाय्वादीनामपि स्वरूपमुक्तम्। केचिद्वदन्ति, न सन्ति शब्दाद्येकैकगुणाश्रयाणि पृथग्भूतानि द्रव्याणि, हस्तादिभिः पृथक्कृतानां तादृशामलाभादिति। लौकिकानामर्व्वागदृशां पक्षे तत् सत्यं, नतु योगिनां समाधिबलयुक्तानामिति व्याख्यातम्। तैः पुनरिदमुच्यते, एकस्यैव जड़बाह्यद्रव्यस्य क्रियाभेदाः शब्दादयः, किं पञ्चद्रव्यकल्पनेनेति। शब्दादीनां क्रियाजन्यत्वात् न च शब्दाद्याश्रयस्य बाह्यद्रव्यस्य यस्य क्रियाभ्यः शब्दादय उत्पद्यन्ते, तस्यास्ति प्रत्यक्षयोग्यता। बाह्यस्यानुमेयमप्रत्यक्षयोग्यं मूलमस्मितात्मकमुपरिष्टात् प्रतिपादयिष्यामः। बाह्यमूलाया अस्या अस्मितायाः परिणामभेदा एव शब्दादीनामाश्रयद्रव्याणि। येषामस्मितात्मकं बाह्यमूलमननुमतं, तेषां शब्दाद्याश्रयद्रव्यं सर्व्वथाप्रमेयं स्यात्। अप्रमेयद्रव्यमेकमनेकं वेति न विचार्य्यम्।

करणप्रसादविशेषात् विषयस्यैव सूक्ष्मावस्था साक्षात्क्रियते न स्थूलग्राह्यमिति ॥ ५३ ॥

बाह्यधर्म्माश्रयो ग्राह्योऽधुना विचार्य्यते। बोध्यत्वं क्रियात्वं जाड्यत्वञ्चेति ग्राह्यधर्म्माः। तत्र सविशेषाः शब्दस्पर्शरूपरसगन्धा इति पञ्च प्रकाश्यधर्म्माः, अन्ये च बोध्यविषयाः ग्राह्याश्रितबोध्यत्व-धर्म्माः। देशान्तरगतिर्बाह्यस्य क्रियात्वधर्म्मलक्षणम्। कर्म्मे-न्द्रियैः शरीरं सञ्चाल्य तथा प्रकाश्यविषयपरिणतिं देशान्तरगति-ञ्चावलोक्य क्रियात्वधर्म्मा उपलभ्यन्ते। क्रियारोधका जाड्यत्व-धर्म्माः। शारीरबाधां बुद्धा तथा जाड्यत्वापगमात्लके शरीरचालने कर्म्मशक्तिव्ययञ्च बुद्धा, तथाच प्रकाश्यविषयावरणमवलोक्य जाड्यत्वधर्म्मा अवगम्यन्ते। कठिनता-तरलता-रश्मिता-वाय-वीयतादयः जाड्यत्वमूला बोधाः ॥ ५४ ॥

प्रत्येकं बाह्यद्रव्येषु बोध्यत्वक्रियात्वजाड्यत्वधर्म्माणां कति-पयविशेषधर्म्मा वर्त्तन्ते। तादृंशि त्रिविशेषधर्म्माश्रयद्रव्याणि भौतिकमित्युच्यन्ते। यथा घटपटधातुपाषाणादयः। क्रियात्व-जाड्यत्वयोरपि बोध्यत्वात् तयोर्बोध्यत्वधर्म्मे उपसर्ज्जनीभावः। द्विष्टो हि बाह्यबोध्यत्वधर्म्मः, प्रकाश्यविषयो बाह्योद्भवानुभाव्य-विषयश्चेति। तत्र प्रकाश्यधर्म्माणामेव बाह्याभिविधिः विस्तार-युक्तः बाह्यवस्तुप्रतीतिरूपः। बाह्यजन्यत्वेऽपि नानुभाव्यविषयस्य सुखकरत्वादेः बाह्याभिविधिः। तस्मात् सर्व्वबोध्यत्वक्रियात्व-जाड्यत्वधर्म्मेषु पुरोवर्त्तिनः प्रकाश्यधर्म्माः। तान् पुरस्कृत्यान्ये उपलभ्यन्ते। तस्मात् प्रकाश्यधर्म्मानुसारत एव स्थूलविषयान् सूक्ष्मविषयेषु विभज्य साक्षात्करणीयम्। प्रत्यक्षविषयाणां प्रकाश्यधर्म्माणां शब्दस्पर्शरूपरसगन्धा इति पञ्च भेदाः। तस्मात्

पञ्च एव तत्तद्धर्म्माश्रयाणि साक्षात्कारयोग्यानि भौतिकोपादानानि भूताख्यद्रव्याणि। क्रियात्वजाड्यत्वे परिणामरुद्धतारूपाभ्यां सामान्यतः भूतेषु समन्वागते ॥ ५५ ॥

आकाशवाय्वुतेजोऽप्क्षितयो भूतानि। तत्र शब्दमयं जड़परिणामिद्रव्यमाकाशम्। तथा स्पर्शादिमया यथाक्रमं वाय्वादयः। प्रकाश्यधर्म्मसूलविभागत्वान्न भूतानि हस्तादिभिः पृथक्करणीयानि। हस्तादिभिर्विभक्तस्य भौतिकस्य भौतिकान्तरेषु अतत्त्वानुसारी विभागः स्यात्। निरुद्धापरेषु एकैकेन ज्ञानेन्द्रियेण भूतानि पृथगुपलभ्यन्ते। वितर्कानुगतसमाधौ निरुद्धेषु त्वगादिषु अनिरुद्धेन श्रोत्रमात्रेण यद्बाह्यं शब्दमयं वस्त्वस्तीति प्रत्यक्षीक्रियते तदाकाशस्वरूपम्। एतेन वाय्वादीनामपि स्वरूपमुक्तम्। केचिद्वदन्ति, न सन्ति शब्दाद्येकैकगुणाश्रयाणि पृथग्भूतानि द्रव्याणि, हस्तादिभिः पृथक्कृतानां तादृशामलाभादिति। लौकिकानामर्व्वागदृशां पक्षे तत् सत्यं, नतु योगिनां समाधिबलयुक्तानामिति व्याख्यातम्। तैः पुनरिदमुच्यते, एकस्यैव जड़वाह्यद्रव्यस्य क्रियाभेदाः शब्दादयः, किं पञ्चद्रव्यकल्पनेनेति। शब्दादीनां क्रियाजन्यत्वात् न च शब्दाद्याश्रयस्य वाह्यद्रव्यस्य यस्य क्रियाभ्यः शब्दादय उत्पद्यन्ते, तस्यास्ति प्रत्यक्षयोग्यता। वाह्यस्यानुमेयमप्रत्यक्षयोग्यं मूलमस्मितात्मकमुपरिष्टात् प्रतिपादयिष्यामः। वाह्यमूलाया अस्या अस्मितायाः परिणामभेदा एव शब्दादीनामाश्रयद्रव्याणि। येषामस्मितात्मकं वाह्यमूलमननुमतं, तेषां शब्दाद्याश्रयद्रव्यं सर्व्वथाप्रमेयं स्यात्। अप्रमेयद्रव्यमेकमनेकं वेति न विचार्य्यम्।

किञ्च प्रत्यक्षधर्म्मानुसारत एव भूतविभागः । सूक्ष्मातिसूक्ष्ममपि वाह्यभावं साक्षात्कुर्व्वतः पञ्चधैव वाह्योपलब्धिः स्यात् ॥ ५६ ॥

यथा लौकिकैस्त्रिविशेषधर्म्माश्रयाणि भौतिकद्रव्याणि सन्तीति निश्चीयते, तथा योगिभिरपि भूततत्त्वं साक्षात्कुर्व्वद्भिः शब्दाद्येकैकधर्म्माश्रयिणो वाह्यभावा निश्चीयन्ते। यथा वा लौकिकैः हाटकरूपकादिषु भौतिकानि विभज्य शिल्पादौ प्रयुज्यन्ते, तथा योगिभिरपि सर्व्वभौतिकेषु शब्दमयादीनि भूताख्यानि पञ्चद्रव्याणि साक्षात्कुर्व्वद्भिस्त्रिकालदर्शनादौ तानि प्रयुज्यन्ते। भूतलक्षणं यथाहुः—

"शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः ।
ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ।
धारिणी सर्व्वभूतानां पृथिवी गन्धलक्षणा ॥" इति ॥ ५७ ॥

घातमन्थनादिजन्यत्वात् क्रियात्मकाः शब्दादय इति प्राग्व्याख्यातः। तत्र शब्दगुणस्याव्याहतता विश्वतःप्रसार्य्यता तथेतरतुलनया च पुष्कलग्राह्यता, ततः शब्दाश्रयमाकाशं सात्त्विकम्। तापादेः शब्दादप्रसार्य्यतादर्शनाद्वायुः सात्त्विकराजसः। तदुभयाभ्यां रूपस्य व्याहततरः प्रसारः तथा चाशुसञ्चाराच्च तस्य क्रियाधिक्यं, ततस्तेजो राजसम्। रसो गन्धात् सूक्ष्मक्रियात्मकस्तस्मात् अब्भूतं राजसतामसम्। स्थूलक्रियात्मकत्वाद्गन्धस्य क्षितिभूतं तामसम्। स्मर्य्यते च—"अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्च धातवः" इति। पञ्च धातवः पञ्च भूतानीत्यर्थः ॥ ५८ ॥

षड्जर्षभ-नीलपीत-मधुराम्लादयः शब्दादिगुणानां विशेषाः। सौक्ष्म्याद्यत्र षड्जादयः भेदाः प्रत्यस्तमिता भवन्ति, तदविशेषशब्दादिमात्राश्रयं वाह्यद्रव्यं तन्मात्रम्। स्थूलस्य सूक्ष्मसङ्घात-

जन्यत्वात् तन्मात्रं भूतकारणम्। भूतवत् तन्मात्रमपि प्रत्यक्ष-तत्त्वं, नानुमेयम्। प्रत्यक्षेण यस्य तत्त्वमुपलभ्यते तत्प्रत्यक्ष-तत्त्वम्। उक्तमिन्द्रियाणां विषयात्मकक्रियाग्राहकत्वम्। समाधिना स्थैर्य्यकाष्ठाप्राप्तेषु इन्द्रियेषु तेषां विषयात्मचाञ्चल्य-ग्राहकताभावे च प्रत्यस्तमयते विषयज्ञानम्। प्रागस्तगमना-दतिस्थिरयेन्द्रियप्रणालिकया उह्यमानातिसूक्ष्मवैषयिकोद्रेको यद्वाह्यज्ञानमुत्पादयति तत् तन्मात्रस्वरूपम्। तदाति-स्थैर्य्यत्वादिन्द्रियाणां स्थूलक्रियात्मानो विशेषविषयाः सूक्ष्मया एकयैव दिशा गृह्यन्ते। तस्मात् तन्मात्राणि अविशेषा इत्यु-च्यन्ते। यथोक्तम्—

"तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता।
न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः॥" इति।

विशेषाः षड्जादयस्तद्रहिता अविशेषा इत्यर्थः। यथोक्तम्—"विशेषाः षड्जगान्धारादयः शीतोष्णादयः नीलपीतादयः कषायमधुरादयः सुरभ्यादयः" इति। विशेषरहितत्वात्तानि शान्ततादिशून्यानि। शान्तः सुखकरः घोरः दुःखकरः मूढो मोहकर इति। वाह्यस्य नीलपीतादिविशेषगुणेभ्य एव सुखादि-करत्वं, तद्रहितस्याविशेषस्यैकरसस्य तन्मात्रस्य नास्ति सुखादि-करत्वमिति। तन्मात्राणि यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूप-तन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति। तानि यथाक्रममाकाशा-दीनां कारणानि। शब्दादिगुणानां यातिसूक्ष्मावस्था तदाश्रयं द्रव्यमेव तन्मात्रम्। यथोक्तं भास्कराचार्य्येण वासनाभाष्ये—"गुणस्यातिसूक्ष्मरूपावस्थानं तन्मात्रशब्देनोच्यते" इति। सूक्ष्म-गुणाश्रयस्याविरलद्रव्यस्य सूक्ष्मैकोऽवयवः परमाणुः। भूतवत्

तन्मात्राण्यपि ज्ञानेन्द्रियमात्रग्राह्याणि। निरुद्धेष्वपरेष्वेकेनैव ज्ञानेन्द्रियेण विचारानुगतसमाधिस्थिरेण गृह्यमाणानि तानि पृथगुपलभ्यन्ते ॥ ५९ ॥

तन्मात्रेभ्यः परः सूक्ष्मो बाह्यो भावो न प्रत्यक्षयोग्यः। भूततन्मात्रयोः स्वरूपप्रत्यक्षं तत्त्वसाक्षात्कारे समासत उपपादयिष्यामः। तन्मात्रकारणं न बाह्यत्वेन प्रत्यक्षीभवति। तत्तु अनुमानेन निश्चीयते। योगिनां परमप्रत्यक्षपूर्व्वकं हि तदनुमानम्। तन्मात्रसाक्षात्कारे विषयस्य सूक्ष्मचाञ्चल्यात्मकत्वमनुभूयते, तत इन्द्रियाणामपि अभिमानात्मकत्वमुपलभ्यते। तस्य चाभिमानस्य ग्राह्यकृतोद्रेकाज्ज्ञानम्। यदभिमानं चालयति तदभिमानसजातीयं स्यादिति। तस्माद्ग्राह्यमभिमानात्मकमित्यनया दिशा ग्राह्यमूलग्रहणयोः सजातीयत्वं निश्चीयते ॥ ६० ॥

सतः विषयाश्रयद्रव्यस्य बाह्यमूलस्य गत्यन्तराभावादपि अभिमानात्मकत्वकल्पनं युक्तम्। सद्बुद्धिः प्रत्यक्षे भावे गृह्यमाणधर्म्मैः विशिष्टा सम्प्रजायते, अप्रत्यक्षे च भावे पूर्व्वज्ञातधर्म्मैर्विशिष्टा उत्पद्यते, नाविशिष्टा सद्बुद्धिः स्यातुमुत्सहते। अत्यध्यक्षस्य बाह्यमूलस्य सत्ता स्वमाहात्म्येनैवोपतिष्ठते, सा च सद्बुद्धिः कैरेव धर्म्मैः विशिष्टा कल्पनीया स्यात्। न रूपादिधर्म्मास्तत्र कल्पनीयाः, बाह्यमूले तदभावात्। तस्माद्गत्यन्तराभावादान्तरद्रव्यधर्म्मा एव तत्र कल्पनीयाः। यतः बाह्यस्य रूपादेरान्तरस्य चाभिमानादेरतिरिक्तौ वस्तुधर्म्मौ नास्माभिर्ज्ञायते। सर्व्वाऽप्रत्यक्षज्ञेयपदार्थसत्ता बाह्यैर्वान्तरैर्वा धर्म्मैरेव विशिष्टा कल्पनीया ॥ ६१ ॥

अतः सिद्धं बाह्यमूलस्याभिमानात्मकत्वम्। यस्य तदभि-

मानः, स विराट्पुरुष इत्यभिधीयते। अस्मत्तुलनया तस्य निरतिशयवृहत्त्वम्। तथाच शास्त्रम्—

"यदा प्रबुद्धो भगवान्, प्रबुद्धमखिलं जगत्।

तस्मिन् सुप्ते जगत् सुप्तं, तन्मयञ्च चराचरम्॥" इति।

सुप्तिजागराभ्यां चेज्जगतः लयाभिव्यक्ती, तदा तयोराश्रयभूतं विराट्पुरुषस्यान्तःकरणमेव जगदात्मकमिति सिद्धम्॥ ६२॥

येषान्तु पुरुषविशेषस्येच्छासम्भूतमिदं जगत्, तत्रापि जगतः अभिमानात्मकत्वं स्यात्। इच्छाया अन्तःकरणवृत्तिता प्राग्व्याख्याता, सा चेज्जगतः एकमेव कारणं, तदा जगन्मूलतः अन्तःकरणात्मकं स्यादिति। ग्राह्यात्मकं वैराजाभिमानं भूतादीति आख्यायते। ग्रहणे यः प्रकाशधर्म्मः ग्राह्यतापन्नायामस्मितायां स बोध्यत्वधर्म्मत्वेन भासते। तथा ग्रहणे यः प्रवृत्तिधर्म्मः ग्राह्ये तत्क्रियात्वम्। ग्रहणे च यदावरणं ग्राह्ये तज्जाड्यत्वम्। ग्रहणभावस्याधिकरणं कालः, ग्राह्यभावस्य दिक्। परिणामस्यानन्त्यात् कालावकाशयोरनन्तता प्रतीयते। अतः सत्त्वक्रियाधिकरणभूतौ देशकालौ अपरिमेयौ। ग्रहणात्मिकाया अस्मिताया याः पञ्चधा परिणतयः ग्राह्यतापन्नास्ता एव पञ्च भूततन्मात्ररूपा वाह्यभावाः। यथा ग्रहणे गुणविभागस्तथैव ग्राह्ये॥ ६३॥

न भूतात् तत्त्वान्तरं भौतिकम्। प्रकाश्यकार्य्यधार्य्यधर्म्माणां सङ्कीर्णग्रहणमेव भौतिकस्वरूपम्। चाञ्चल्यात् स्थूलेन्द्रियस्य तथा ग्रहणम्। शब्दस्पर्शरूपरसगन्धा इति पञ्च प्रकाश्यविषयाः, वाक्यशिल्पगम्यसर्ज्यजन्यानीति पञ्च कार्य्यविषयाः, तथाच वाह्योद्भवबोधाधिष्ठानं धातुगतबोधाधिष्ठानं

चालनशक्त्यधिष्ठानम् अपनयनशक्त्यधिष्ठानं समनयनशक्त्यधिष्ठानमिति पञ्च धार्य्यविषयाः, येषां सङ्घातः शरीरमिति ॥ ६४ ॥

व्याख्यातानि तत्त्वानि। सर्गप्रतिसर्गावुच्येते। अनादौ प्रधानपुरुषौ उपादाननिमित्तभूतौ करणानाम्। विद्यमाने कारणे प्रतिबन्धाभावे च कार्य्यस्यापि विद्यमानता स्यादिति नियमात् करणान्यनादीनि। यथाहुः—"धर्म्मिणामनादि संयोगाद्धर्म्ममात्राणामप्यनादिस्संयोगः" इति। तथाच—"अनादिरर्थकृतः संयोगः" इति। तथाच गौपवनश्रुतिः—"नित्यो मनोऽनादित्वात्, न ह्यमना पुमांस्तिष्ठती"ति। अग्निवेश्यश्रुतिश्चात्र—"सोऽनादिना पुण्येन पापेन चानुबन्धः परेण निर्म्मुक्तोऽनन्ताय कल्पते" इत्यादि शास्त्रशतेभ्योऽपि पुरुषस्यानादिकरणवत्ता सिध्यति। करणानि लिङ्गशरीरमित्युच्यन्ते। लिङ्गशरीराणामसंख्यत्वदर्शनादसंख्याताः पुरुषाः। कस्मादसंख्यानि लिङ्गशरीराणि, स्वोपादानस्यामेयत्वादिति। अपरिमेयस्योपादानस्य परिमितकार्य्याण्यसंख्यानि स्युः। गुणसंयोगभेदानामानन्त्यादसंख्याताः करणप्रकृतयः। अतः असंख्याः जीवयोनयः। उपादानस्यामेयत्वाज्जीवनिवासा लोका अप्यनन्तास्तथा चानन्तवैचित्र्यान्विताः। यथोक्तम्—

"ते चानन्त्यं न पश्यन्ति नभसः प्रथितौजसः।
दुर्गमत्वादनन्तत्वादिति मे विद्धि मानस ॥" इति।

अतस्ते ह्यसंख्येया जीवाः कदाचिल्लीनकरणाः कदाचिद्व्यक्तकरणा वाऽसंख्या योनीः आपद्यमाना वा त्यजन्तो वाऽसंख्येषु लोकेषु वर्त्तन्ते ॥ ६५ ॥

द्विविधः करणलयः, साधितः सांसिद्धिकश्च। तत्र योगिन

साधितः लिङ्गशरीरलयः, ग्राह्यभावलयाच्च सांसिद्धिकः । ग्राह्याभावे करणकार्य्याभावः, कार्य्याभावे शक्तिलय इति नियमात् ग्राह्यलये लयः करणशक्तीनाम् । यथाहुः—

"चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥" इति ।

लीने ग्राह्ये करणानि लीनास्तिष्ठन्ति । न च तेषामत्यन्तनाशो, नाभावो विद्यते सत इति नियमात् । ग्राह्याभिव्यक्तौ तानि पुनरभिव्यज्यन्ते । श्रुतिश्चात्र—"तेऽविनष्टा एव विलीयन्ते, अविनष्टा एव उत्पद्यन्ते" इति; "भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयत" इति चात्र स्मृतिः ॥ ६६ ॥

उक्तं जगतः वैराजाभिमानात्मकत्वम् । स्मृतिस्तत्र यथा—

"अभिमान इति ख्यातः सर्व्वभूतात्मभूतकृत् ।
ब्रह्मा वै स महातेजा यत्र ते पञ्च धातवः ।
शैलास्तस्यास्थिसंज्ञास्तु मेदो मांसञ्च मेदिनी ॥" इति ।

तदन्तःकरणस्य च सुप्तिजागराभ्यां जगतः लयाभिव्यक्ती । सुप्तौ जाड्यता क्रियाशून्यता वा भवति । विषयाणां क्रियात्मकत्वाज्जाड्यतापन्ने ग्राह्यमूले वैराजाभिमाने विषया लीयन्ते । ततः अस्मदादीनामपि लिङ्गलयः । जागरे च क्रियाशीले वैराजाभिमाने विषया अभिव्यज्यन्ते । ततः सजातीयत्वात्तैश्चाल्यमानान्यस्मदादीनां करणानि व्यक्ततामापद्यन्ते । यथा सुप्तः पुरुषश्चाल्यमान उन्निद्रो भवति तद्वत् । स्वमूलस्य क्रियावैचित्र्यात् शब्दादीनां वैचित्र्यम् । स्मर्य्यते च—

"अहंकारेणाहरति गुणानिमान्
भूतादिरेवं सृजते स भूतकृत् ।

वैकारिकः सर्व्वमिदं विचेष्टते

स्वतेजसा रञ्जयते जगत्तथा ॥" इति ।

स भूतकृद्भूतादिर्वैकारिकोऽहङ्कारः अभिमानेन इमान् शब्दादिगुणानाहरते विचेष्टते च । विचेष्टञ्च जगदिदं स्वतेजसा रञ्जयते विषयानारोपयतीत्यर्थः ॥ ६७ ॥

सुप्तौ जाड्यत्वान्निष्क्रिये वैराजाभिमाने तद्गताशेषक्रियात्मानो येऽशेषविशेषास्तत्प्रतिष्ठाविषया निस्तैलदीपवत् लीयन्ते । तदाऽप्रतर्क्यं स्तिमितं वाह्यम्भवति । यथाहुः—

"तदा स्तिमितमाकाशमनन्तमचलोपमम् ।

नष्टचन्द्रार्कपवनं प्रसुप्तमिव सम्बभौ ॥" इति ।

निद्राजाग्रतोरन्तरालं स्वप्नावस्था । स्वप्नावस्थायां जाड्यता वाह्यकरणानां, चेतसश्च चेष्टा । वाह्यकरणानियमितस्य सूक्ष्मतरस्य चित्ताभिमानस्य क्रिया ग्राह्यतापन्ना कारणसलिलाख्यं तन्मात्रसर्गमुत्पादयति । तथाच स्मृतिः—"ततः सलिलमुत्पन्नं तमसीवापरं तमः" इति । ततः प्रागुक्तस्तिमितावस्थानानन्तरमित्यर्थः । सन्ध्याख्ये स्वप्नस्थाने जगतः सृष्टिरित्यस्ति श्रुतिस्मृतिप्रवादः ॥ ६८ ॥

जागरे तु स्थूलक्रियाशालिनोऽभिमानाद्ग्राह्यतापन्नात् कठिनता–कोमलता-स्निग्धता–वायवीयता-रश्मितादि-धर्म्माश्रयद्रव्यात्मकः भौतिकसर्ग आविर्भवति । तत्र कठिनताऽतिरुद्धता क्रियायाः । विपरीतक्रिययैव क्रियारोधदर्शनात् कठिने द्रव्ये स्वगतरुद्धक्रियाऽनुमीयते । रश्मिता च अत्यरुद्धता क्रियायाः । न च तत्र जाड्यताभावः, योगिनां रश्मिषु विहारसम्भवात् । यथाहुः—"ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहर-

तौ"ति । कोमलताद्या अल्पाल्पतरक्रियात्मिकाः । वैराजाभिमानस्य क्रियाभेदाद्ग्राह्ये काठिन्यादिभेदः । भूताद्याख्यस्य तदभिमानस्य क्रियावर्त्तौ ग्राह्यस्य व्यवधिर्हेतुर्जलावर्त्तवत् । तदभिमानस्य ग्रहणात्मकस्य यौगपदिकमिव परिणामबाहुल्यं ग्राह्यतापन्नं विस्तारबोधमारोपयति, तस्य च परिणामप्रवाह-विशेषः ग्राह्यभूतो देशान्तरगतिर्भवति ॥ ६९ ॥

स्थूलोत्पत्तौ सांख्यानुमता स्मृतिर्यथा—

"पुरा स्तिमितमाकाशमनन्तमचलोपम् ।
नष्टचन्द्रार्कपवनं प्रसुप्तमिव सम्बभौ ॥
ततः सलिलमुत्पन्नं तमसीवापरं तमः ।
तस्माच्च सलिलोत्पीड़ादुदतिष्ठत मारुतः ॥
यथा भाजनमच्छिद्रं निःशब्दमिव लक्ष्यते ।
तच्चाम्भसा पूर्य्यमाणं सशब्दं कुरुतेऽनिलः ॥
तथा सलिलसंरुद्धे नभसोऽन्ते निरन्तरे ।
भित्त्वार्णवतलं वायुः समुत्पतति घोषवान् ॥
तस्मिन् वाय्वम्बुसङ्घर्षे दीप्ततेजा महाबलः ।
प्रादुरभूदूर्द्ध्वशिखः कृत्वा निस्तिमिरं नभः ॥
अग्निपवनसंयुक्तं खं समाक्षिपते जलम् ।
सोऽग्निर्मारुतसंयोगाद्घनत्वमुपपद्यते ॥
तस्याकाशं निपततः स्नेहस्तिष्ठति योऽपरः ।
स सङ्घातत्वमापन्नो भूमित्वमनुगच्छति ॥
रसानां सर्व्वगन्धानां स्नेहानां प्राणिनां तथा ।
भूमिर्योनिरिह ज्ञेया यस्यां सर्व्वं प्रसूयते ॥" इति ।

निरन्तरालस्य कारणसलिलस्य स्थौल्यपरिणामे परिच्छिन्न-भौतिकद्रव्यप्रकीर्णं ब्रह्माण्डं बभूव। तदा स्थूलसूक्ष्मवायुव्याप्तान्त-रालं ज्योतिःपिण्डमयं जगदासीत्। घनत्वापद्यमानात् काठिन्या-द्यतिस्थौल्यात्मकात् द्रव्यात् सूक्ष्मतराणि वायवीयद्रव्याणि पृथग्-बभूवुः। तस्मादाहुः—"भित्त्वे"ति। घनत्वाप्तिजनितसङ्घर्षाच्च उत्तापोद्भवो येनोत्तप्तानि स्थूलभौतिकानि ज्योतिःपिण्डाकाराणि बभूवुः। तत आहुः—"तस्मिन् वाय्वम्बुसङ्घर्षे" इति। अथ तेषां ज्योतिःपिण्डानां खे विचरतां मध्ये केचिद्वायुयोगतः निस्ताप-त्वमापद्यमानाः स्नेहत्वमथ सङ्घातत्वमापद्यन्ते, केचिच्च बृहत्त्वात् स्वयंप्रभज्योतिष्करूपेणाद्यापि वर्त्तन्ते। उक्तञ्च—

"उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयंप्रभैः।
निरुद्धमेतदाकाशमप्रमेयं सुरैरपि॥" इति।

तस्माच्चाहुः—"सोऽग्निर्मारुतसंयोगा"दिति॥ ७०॥

ग्रहणदृष्टिः यः प्रबलक्रियासमुद्रेकः, ग्राह्यदृष्टिः सा घन-त्वाप्तिः स्थौल्यात्मिका। "पादोऽस्य विश्वा भूतानि त्रिपादोऽस्या-मृतं दिवी"ति श्रुतेर्दृश्यमाना लोकाः पादमात्रं, भुवःस्वरादयः सूक्ष्माश्च लोकास्त्रिपादः। तेषु श्रेष्ठतमो महत्तमश्च सत्यलोकः। स च वैराजमहदात्मप्रतिष्ठितः। ग्रहणदृष्टिः सर्व्वाः ग्रहणक्रियाः महदात्मनि निबद्धास्ततो ग्राह्यदृष्टिः सत्यलोकाभ्यन्तरे निबद्धाः सर्व्वे स्थूलसूक्ष्मलोकाः। ग्रहणे तामसाभिमानः स्थितिहेतुः, ग्राह्ये तदभिमानप्रतिष्ठा सङ्कर्षणाख्या तामसी शक्तिर्लोकधारण-हेतुः। उक्तञ्च—

"मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति।
बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्॥" इति।

तथाच—"द्रष्टृदृश्ययोः सङ्घर्षणमहमित्यभिमानलक्षण"मिति । अनया सङ्घर्षणाख्यधारणशक्त्या सत्यलोकाभ्यन्तरे निबद्धाः स्थूललोका विचरन्ति वर्त्तन्ते च ॥ ७१ ॥

स्थूलसूक्ष्मलोकसर्गानन्तरं धार्य्यप्राप्तौ लीनकरणा जीवाः व्यक्तकरणाः सूक्ष्मबीजरूपाः प्रादुर्बभूवुः । कर्म्माशयवैचित्र्याद्दैवमानुषतिर्य्यगुद्भित्प्रकृत्यापूरितैर्विचित्रकरणैः समन्वितास्ते सूक्ष्मबीजजीवा अभिव्याञ्जिषुः । तेष्वसङ्ख्येषु बीजजीवेषु मध्ये ये त्वौपपादिकदेहबीजा जीवास्ते सहसा प्रादुर्बभूवुः । कालपर्य्यायादुद्भिज्जदेहबीजा जीवा अत्युर्व्वरभूमियोगात् स्वत एव शरीराणि परिजगृहुः । स्मृतिश्चात्रेयं भवति—

"भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्य्ययात् ।
उद्भिज्जानि च तान्याहुर्भूतानि द्विजसत्तमाः ॥" इति ।

तथाच—"उद्भिज्जा जन्तवो यद्वत् शुक्लजीवा यथा यथा ।
अनिमित्तात् सम्भवन्ति ॥" इति ।

अथान्ये प्राणिनः समजायन्त । प्राणिषु येऽस्फुटवरकरणाः तथा चातिप्रबलाऽवरकरणाः तेष्वेकायतनस्थिता जननीशक्तिर्भवति । स्फुटवरकरणप्राणिषु प्राणशक्तेरप्राबल्याद्द्विधा विभक्ता जननीशक्तिर्वर्त्तते । तस्मात् स्त्रीपुंभेद इति ॥ ७२ ॥

इति सांख्ययोगि-श्रीहरिहरयति-विरचितः
सांख्यतत्त्वालोकः समाप्तः ।

ॐ

---

ॐ

# तत्त्वनिदिध्यासनगाथा ।

विमोहमैरेयविदुष्टदृष्टि-

र्ददर्श दारद्रविणादिमायाम् ।

शब्दस्पृशारूपरसाश्च गन्ध-

इत्येव बाह्यं खलु धर्म्ममात्रम् ॥ १ ॥

गुणास्त्रयो ये सुखदुःखमोहा-

स्तदात्मरज्ज्वाहमहो निबद्धः ।

छित्त्वा विरागेण गुणोत्थपाशं

पश्यामि बाह्यं ह्यविशेषमात्रम् ॥ २ ॥

सङ्घातनीलरक्तादिकुहकं प्रविलीयते ।

तन्मात्रतत्त्वबुद्ध्या तु यथावश्या खरांशुना ॥ ३ ॥

छिद्राणि करणानि स्युः अभिमानगृहस्य मे ।

यैर्भीमा यान्ति वायान्ति सदा विषयजिह्मगाः ॥ ४ ॥

खालाने ह्यस्मितारज्ज्वा बद्धस्य प्रतिभाति मे ।

बाह्यसञ्चालनात् सर्व्वो विषयस्तापदायकः ॥ ५ ॥

निविष्टमात्रे करणस्वरूपे

अन्तःस्वसत्त्वाधिगते च चित्ते ।

दिग्देशभानं समपैयते हि

शब्दादियुक्तं मृगतृष्णिकेव ॥ ६ ॥

ज्ञाताहमेवास्मि तथा च कर्त्ता
सर्व्वेन्द्रियाणामहमेव निष्ठा ।
सदाधितिष्ठानि तदस्मिभावं
समावृताच्चः करणप्रधानम् ॥ ७ ॥

स्वतन्त्रमात्माधिगमप्रजात-
महो सुखं स्वात्मविभासमुत्थम् ।
सुधावसिक्तं हि मदीयसर्व्व-
मानन्दनाम्रूल्लमिमं तनोति ॥ ८ ॥

अस्मीति-स्मृतिसन्तान-भानु-भात-मनोऽम्बरे ।
सदा तिष्ठानि संलीन-वितर्क-ग्रहतारके ॥ ९ ॥

स्मारं स्मारं सदास्मीतिमात्रं रुद्धाखिलश्च खम् ।
कदाभिनिविशे श्रेयस्विन्मात्रं केवलं पदम् ॥ १० ॥

ओम्म्मित्येतन्महामन्त्रं सर्व्वतत्त्वार्थवाचकम् ।
संहृत्योकारतो हृद्यं म्म्मकारं हृदि योजयेत् ॥ ११ ॥ *

इति सांख्ययोगि-श्रीहरिहरयति-विरचिता
तत्त्वनिदिध्यासनगाथा समाप्ता ।

---

* श्लोकानामेषामर्थभूतः तत्त्वध्यानक्रमः सङ्क्षेपेणोच्यते । आदौ भूततत्त्वध्याने दार-द्रविणादि-भौतिकानि रागाद्यास्पदानि शब्दस्पर्शरूपादिगुणमात्राण्येवेति ध्यायेत् । ततः तन्मात्रध्याने बाह्यविरक्तिभावं ध्यात्वा सर्व्वे शब्दादयो मे इन्द्रियाभिघातमात्रकारका इति ध्यायेत् । ततः इन्द्रियतत्त्वध्याने सर्व्वाणीन्द्रियाणि मेऽभिमानव्यूहभेदमात्राणीति ध्यायेत् । ततः अन्तःकरणतत्त्वध्याने सर्व्वकरणाधिष्ठाहं अस्मीतिप्रत्ययमात्र-मनुसन्दध्यात् । ज्ञपदार्थाधिगमाय ध्रुवां स्मृति-मभ्यसेत्, स्मृतिधारालम्भे सति निभालनात् ज्ञपदार्थाधिगमः दिग्देशभानशून्यः स्मृतेरनुभवात्मकत्वात् । ततश्च ज्ञातरि स्थितिः स्यादिति । तत्त्वार्थस्य युक्तिक्रियायाश्च प्रणवं वाचकं बुद्धा तज्जपेन चित्तं युञ्जीतेति ।

सांख्ययोगि-श्रीहरिहरयति-विरचितं


# महायोगेश्वरस्तोत्रम् ।



ॐ नमाम्यकार्य्यं प्रविलीनलिङ्ग-
मात्मानमात्मन्यवलोकयन्तम् ।
अनादिसत्त्वात् खलु वस्तुजात्या
मुक्तोऽप्यनादिः पुरुषोऽस्ति स त्वम् ॥ १ ॥

प्रत्यक्षं गरलं दुःखं सुखं मध्वाहितो गरः ।
तयोर्धाता विभो न त्वं गरदोऽसि कृपामय ॥ २ ॥

अनादिकर्म्म-प्रविपाकजन्यैः
सुखैश्च दुःखैरभिहन्यमानः ।
ध्यात्वा प्रभो त्वां परिशान्तिमेमि
श्रेष्ठस्ततस्त्वं निखिलात्ममासि ॥ ३ ॥

पितेति मन्ये ननु मानुषः स
तथैव दोषाचितमात्मभावः ।
महेश्वरार्हः परभक्तिभावो
य आत्मनः सा ह्युपमेव नान्या ॥ ४ ॥

इष्टप्रदात्मत्वमकर्म्म कार्य्य-
मारोपयन्ति त्वयि मूढचित्ताः ।
नैश्वर्य्यमाहात्म्यमवेयते ते-
र्यज्ञानकर्म्मात्मभीष्टसिद्धैः ॥ ५ ॥

अलं चिदीरिताव्यक्तं सञ्चरप्रतिसर्गयोः ।
तस्मात् संहृत्य लिङ्गं त्वं शक्तोऽप्यात्मनि तिष्ठसि ॥ ६ ॥

इच्छैकं साधनं ते हि क्रियाप्तिसमयः क्षणः ।
सोऽबोधकल्पितो यस्ते नानोपायपरिग्रहः ॥ ७ ॥

किं कामये त्वन्नु सम्प्रमोत्तुं
अदः किलात्माभिनिवर्त्तनीयम् ।
लिङ्गं न मे लाययसि प्रभो त्वं
नात्माऽक्षतः शाश्वतिको यतः स्यात् ॥ ८ ॥

चिन्मात्रमित्येव भवान् हि गीतः
स्वस्थो यतस्त्वञ्च नुतं श्रुतौ ते ।
लिङ्गं तथैशं ह्यपि कृतवान् यत्
श्रेयः परं किञ्चिदिति दर्शयन् त्वम् ॥ ९ ॥

आसङ्गमिच्छामि निरन्तरालं
त्वप्राप्तिर्हन्त तु बाधते माम् ।
प्राप्यात्मनि त्वां समनुप्रविष्टं
विच्छेदवह्निः प्रिय शाम्यतीश ॥ १० ॥

त्वन्नामकीर्त्तने चेतो वाचि चापि प्रवर्त्तते ।
परानुरक्तिमेवैमि त्वक्ता तदप्यहो कदा ॥ ११ ॥

त्वां त्वन्निवेदितात्माहं कदा स्मृतिसुधाप्लुतः ।
आनन्दाश्रुकणान् मुञ्चन् अधितिष्ठामि चानिशम् ॥ १२ ॥

प्रणिधानात् समाप्नोमि कैवल्यं परमं पदम् ।
अनवच्छिन्नकालात्त्वं कदाधिराजसे यतः ॥ १३ ॥

ओम्म्मित्येतन्महामन्त्रं महायोगीशवाचकम् ।
स्मृतिमुत्थाप्य चौकारात् तिष्ठन्म्म्मकारतस्ततः ॥ १४ ॥ *

---

* मुमुक्षुसेव्यम् ईश्वरप्रणिधानमुच्यते । समाहितपुरुषार्हम् अपारात्मदर्शिव्यञ्जकेषद्धास-युक्तवदनम् उन्मेषनिमेषशून्यनयनम् अकामामनस्कभावव्यञ्जकं भगवतो विग्रहम् शिरस्य-नुचिन्तयेत् । सर्व्वव्यापिनमीशं तत्राभिव्यक्तं बुद्धा तस्मिन् भगवद्विग्रहे आत्मविग्रहमनु-प्रवेशयेत् । ततः निवातदीपकल्पे प्रसन्ने भगवच्चेतसि स्वचित्तमनुप्रवेशयेत् । एवं तन्मयं

# पारिभाषिक-शब्दार्थः ।



☞ एतद्ग्रन्थपाठसमये पाठका निम्नलिखितशब्दार्थान् स्मरेयुः ।

**पदार्थः** = पदाभिहितमात्रम् (भावरूपः, अभावरूपश्च) ।

**वस्तु** = भाव-पदार्थः (द्रव्यं, गुणश्च) = भावः ।

**द्रव्यम्** = गुणाश्रयः (आन्तरं, वाह्यञ्च) ।

**गुणः** (सत्त्वादि-व्यतिरिक्तः) = द्रव्यं यस्याश्रयः = द्रव्यस्य वृत्तः भावः = धर्म्मः (वाह्यः आन्तरश्च) । मूल-वाह्यगुणाः = बोध्यत्वं, क्रियात्वं, जाड्यत्वञ्च । मूलान्तर-गुणाः = प्रख्या, प्रवृत्तिः, स्थितिश्चेति ।

**विषयः** = वाह्यान्तरकरणशक्तिव्यापारः (बोध्यविषयः, कार्य्यविषयः, धार्य्यविषय-श्चेति) । **बोध्यः** = प्रमेयः, अनुभाव्यश्च । **कार्य्यः** = स्वेच्छः, स्वतश्च । **धार्य्यः** = द्रव्यं (शरीरादि), शक्तिश्च । **प्रमेयः** = गृह्यमाणः (प्रकाश्यः), तथा अगृह्यमाणः (अनुमेयः, आप्तश्च) । **स्वेच्छविषयः** = कर्म्मेन्द्रियादि-कार्य्यम् । **स्वतःक्रियाविषयः** = प्राणादिकार्य्यम् । [सर्व्वे विषया वाह्या वा आभ्यन्तरा वा भवन्ति ।]

**बोधः** = ज्ञमात्रम् = आत्मबोधः (स्वप्रकाशः), प्रमाणम्, अनुभवश्च । **प्रमाणम्** = करणवाह्यभावबोधः । **अनुभवः** = करणगत भावबोधः ।

**करणम्** = आबुद्धि-समानान्ताः, पुंसः भोगापवर्ग-क्रियायाः साधकतमाः आत्मशक्तयः ।

**शक्तिः** = क्रियायाः पूर्व्वपरावस्था । आन्तरशक्तिः = संस्कारः, मनो वा । वाह्यशक्तिः = जाड्यत्वम् ।

**क्रिया** = शक्तेर्व्यक्तावस्था = वाह्यक्रिया (देशाश्रया), आन्तरक्रिया (कालाश्रया) च ।

---

तन्निवेदितमात्मानं कृत्वा परमानुरागपूर्व्वकं तद्भावस्मरणं योऽन्ययुक्तिवाचकप्रणवजपेन सह अभ्यसेदिति । अभ्यासदार्ढ्यात् ईश्वरप्रकृत्यापूरः । यथायं पुरुषः स्वरूपप्रति-ष्ठस्तथाहमपीत्यनया दिशा च प्रत्यक्चेतनाधिगम इति । सर्व्वशक्तस्य विग्रहधारण-मीषत्करमिति हेतो तस्मिन्नेव सर्व्वात्मना ध्येये विग्रहे अभिव्यक्तः सन् भगवान् हिरण्य-गर्भः साक्षात्कारकामं प्रणिहितं योगिनं ज्ञानधर्म्मावुपदिशतीति ।

---

☞ २२ पृष्ठे १६ पंक्तौ स्वप्नस्थाने जगतः इत्यशुद्धं, स्वप्नस्थाने सूक्ष्मा इति शुद्धम् ।
संचिप्त-तत्त्वनिर्देशे प्रवृत्ति-स्थित्यो इत्यशुद्धं, प्रवृत्ति-स्थितिभ्याम् इति शुद्धम् ।